पञ्चाऽध्यायात्मकोऽयं ग्रन्थः काव्यप्रकाशं-रसगङ्गाधरयोः स्थितानि काव्यलक्षण-कारण-तद्भेद-रस-रीतिगुणालङ्कारप्रभृतिविषयकवि-मतिस्थलानिनानाप्राच्यनव्यटीकासिद्धान्त-साहाययेन शास्त्रीयया संस्कृतभारत्या ससमासव्यासमक्षिलक्ष्यीकारयति ।

# काव्यप्रकाशरसगङ्गाधरयोस्तुलना

डॉ० राम कुमार शर्मा
व्याख्याता, साहित्य
ज० ना० व्र आदर्श संस्कृत महाविद्यालय
रामभद्रपुर-लगमा
दरभङ्गा






नाग प्रकाशक
११/यू. ए. जवाहर नगर, दिल्ली-११०००७

राष्ट्रिय संस्कृत संस्थान, नई दिल्ली के वित्तीय सहयोग से प्रकाशित



(१) ११ए/यू. ए. जवाहर नगर, दिल्ली-११०००७

(२) संस्कृतभवनम्, १२,१५ आवासः, संस्कृतनगरम्, प्लाट सं० ३, प्रखण्डः-१४
रोहिणी, नव-देहली-११००८५

(३) जलालपुर माफी (चुनार-मिर्जापुर) उ० प्र०

ISBN 81-7081-375-1



मूल्य-रु० 120.00

प्रथम संस्करण : १९९७

श्री सुरेन्द्र प्रताप द्वारा नाग प्रकाशक, ११ए, यू. ए., जवाहर नगर, दिल्ली ११०००७, द्वारा प्रकाशित तथा जी. प्रिंट प्रासेस, ३०८/२, शहजादा बाग, दयाबस्ती, दिल्ली ११००३५ द्वारा मुद्रित।

अक्षरयोजक :
युनिक प्रिंट मिडिया,
दिल्ली-९

# KĀVAYAPRAKĀŚ-RASAGANGĀ-DHARAYOSTULANA

DR. RAM KUMAR SHARMA
(Lecturer, Sahitya)
J.N.B. Adarsh Sanskrit College
Raınbhadrapur-Lagamā
Darabhanga




NAG PUBLISHERS
11A/U.A. JAWAHAR NAGAR, DELHI-110007

# आत्मनिवेदनम्

विश्वाख्यं सरसं चित्रं
काव्यं यः सरसं व्यधात्।
आदये कवये तस्मै
सते परात्मने नमः ॥

अयि सुरभारतीसुरसरित्स्नाननिर्मलान्तकरणाः नानाविद्यार्थिवृन्दसमुपास्यमानचरणाः स्वविद्याविभाविनाशिताज्ञानावरणा धीधनाः! सत्सुधीसङ्गरसिकानां सम्यगधीताध्यापितव्याकरण-वेदान्तसाहित्यायुर्वेदादिशास्त्राणां विहारस्थौरङ्गावादमण्डलान्तर्गतकरहरीग्रामगृहीतजन्मनां दरभङ्गास्थकामेश्वरसिंहसंस्कृतविश्वविद्यालयेऽलङ्कृतसम्मानितप्राध्यापकपदानां कृष्णवद्राधानामप्रियाणां परोपकारनिरताना मिदानीं गोलोकवासिनां गुरुवराणां श्रीरङ्गेश्वरनाथमिश्राणां कृपालेशतोऽवगतसाहित्यादिशास्त्रस्य ममालङ्कारशास्त्राध्ययने महती प्रीतिरस्ति। अधीतसाहित्यदर्पणग्रन्थस्य मम मानसे पुरा काव्यप्रकाशस्य निःसारता प्रतीयमानाऽऽसीत्। आचार्यकक्षायां रसगङ्गाधराध्ययनसमये पण्डितराजस्य पाण्डित्यमवलोकितवता मया काव्यप्रकाशे नितरां निरादरेणाऽभावि। परन्तु यदा काव्यप्रकाशस्य बालबोधिनी रसगङ्गाधरस्य गुरुमर्मप्रकाश-सरला-चन्द्रिकाख्याष्टीकाग्रन्था व्यलोकिषत तदा काव्यप्रकाशे सादरोऽभवम्। यदा रसगङ्गाधरस्य केदारनाथओझाप्रणीतां रसचन्द्रिकां टीकामद्राक्षम्, तदाज्ञासं यदयं महानुभावो बहुविधक्लिष्टकल्पनया काव्यप्रकाशसिद्धान्तदूषको रसगङ्गाधरमतभूषकश्च वर्तते। एवं विलोकितबहुविधकाव्यप्रकाशरसगङ्गाधरटीकाग्रन्थानां सिद्धान्तस्य सङ्ग्रहो यद्येकत्र स्यात्तदा जिज्ञासूनां कृते महानुपकारो भवेदिति। ततो मया "काव्यप्रकाश-रसगङ्गाधरयोस्तुलने"ति नामधेयोऽयं ग्रन्थोऽलेखि, यत्रोपलभ्यमानस्य समस्तस्य रसगङ्गाधरस्य काव्यप्रकाशस्य च सिद्धान्ता नानाटीकाग्रन्थान् आश्रित्य समीक्षिताः।

अयं ग्रन्थः पञ्चस्वध्यायेषु विभक्तः । तत्र प्रथमाध्याये काव्यलक्षण-तत्कारणतद्भेदविषये विचारः कृतः । प्राक्काव्यप्रकाशरसगङ्गाधरयोरुल्लिखिते काव्यलक्षणे लिखिते ततो नानाटीकाग्रन्थानुसारेण ते सपदपदार्थे व्याख्याते । तयोर्विषये स्वकीयमपि मतं प्रकटितम् । काव्यकारणनिरूपणे समागतानां शक्तिप्रतिभानिपुणतादिपदार्थानां विषये नानाग्रन्थान् समाश्रित्य विचारितम् । तत उभयमते समीक्षाऽकारि । अन्ते च काव्यभेदविषये मम्मट पण्डितराजयो र्विचारान् प्रदर्श्य स्वसम्मतिः प्रकटिता ।

द्वितीयाध्याये रसध्वनिरीतिगुणादिविषये मम्मट-पण्डितराजमतमुपन्यस्य तयोः सिद्धान्तयोस्तुलनाऽकारि । पूर्वं रसनिरूपणप्रकरणे समागतानां विभावादिपारिभाषिकशब्दानां निर्विकल्पक-सविकल्पक-साक्षिभास्यादिदार्शनिकपदानां चार्थाः स्फोरिताः । तत्पश्चाद् रसविषयको विचारः सविस्तरं प्रदर्शितः । तदनन्तरं ध्वनिभेदादिविषये मतवैषम्यं प्रदर्श्य युक्तायुक्तत्वे समुल्लिखिते । ततो गुणस्वरूपं निरूप्य गुणानां रसधर्मत्वं समुचितं नवेति विचारितम् । ततो वृत्तिमार्गादिशब्दव्यपदेश्यानां रीतीनां तुलना विहिता ।

तृतीयाध्याये काव्यप्रकाश-रसगङ्गाधरोक्तानामलङ्काराणां नामान्युल्लिखितानि । तदनन्तरं 'उपमा रूपकम्' इत्यादि रूपेण पृथक् पृथक् समेषामलङ्काराणां नामानि निर्दिश्योभयग्रन्थोक्तानि तेषां लक्षणानि लक्षणाशयं च सम्यङ्निरूप्य साम्यवैषम्ये प्रदर्शिते । अन्ते काव्यप्रकाशे प्रोक्तानामपि रसगङ्गाधरेऽनुक्तानां रसगङ्गाधरे लब्धानामपि काव्यप्रकाशेऽप्राप्तानां चालङ्काराणां नामानि लिखितानि, तेषामनुक्तौ बीजमपि चोपन्यस्तम् । एवं समेभ्योऽध्यायेभ्योऽयमेवाऽध्यायः स्वरूपविचारदृशा महत्तमः । अस्मिन्नेवाध्याये प्रकटितं यत् पण्डितराजः प्रथमान्ताऽर्थमुख्यविशेष्यकशाब्दबोधसमर्थक आचार्य आस्ते । अनेन वैयाकरणमतमुपेक्षमाणेन स्वतन्त्र आलङ्कारिकसमयो व्यवस्थापितः । स्वमते 'भावप्रधानमाख्यातम्' इति निरुक्तग्रन्थोऽन्यथा व्याख्यातः । परिहृतश्च प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधमते वैयाकरणैः प्रत्तो दोषसमुदयः । एतस्य युक्तायुक्तत्वे अध्यायेऽस्मिन्नुलिखिते ।

चतुर्थाध्यायेऽद्भुतरसोदाहरणशाब्दाभिधामूलव्यञ्जनादिषु प्रकीर्णविषयेषु विचारः प्रदर्शितः । साम्य-वैषम्ये सम्यक् प्रदर्श्य युक्तायुक्तत्वे विचारिते । एमध्यायः समापत् ।

पञ्चमाध्याय उपसंहारो विद्यते । अत्र विषयाणामेषां संक्षेपतः कथनमस्ति । काव्यप्रकाशरसगङ्गाधरस्यालङ्कारशास्त्रसिद्धान्ताः समासतः प्रदर्शिताः । एवमंयमध्यायः पूर्णतामगात् ।

एतद्ग्रन्थान्ते सहायकानां ग्रन्थानां सूची सन्नद्धा ।

एतादृशोऽस्य ग्रन्थस्य प्रणयने कामेश्वरसिंह संस्कृत विश्वविद्यालये पूर्वसाहित्यविभागाध्यक्षाणां गुरुवराणां शब्दशास्त्रविशारदानां साहित्यसिन्धुवगाहनमैनाकमहीधराणां साधुवत् कृतन्यायपक्षपातानां दर्शनारण्यस्वच्छन्दसंचारिकेसरिणां झोपाह्वानामुदयकान्तानां समुचितविचारप्रदानेन महत् साहाय्यमजनीति तान् प्रतिसश्रद्धं शिरो नमयामि । सम्प्रति वैकुण्ठवासिनां श्रीरङ्गेश्वरनाथमिश्राणां ज्येष्ठान् पुत्रान् प्राच्यनव्यशास्त्रविशारदान् पटनाविश्वविद्यालयान्तर्गत बी० एन्० महाविद्यालये फिजिक्सविषयस्य प्राध्यापकान् नारिकेलायमानान् सम्प्रत्यपि गुरुवन्मयि बद्धस्नेहान् श्रीनरेशनाथमिश्रान् प्रति कृतज्ञतां प्रकटयामि, ये काव्यप्रदीपरसगङ्गाधरादिग्रन्थप्रदानेन मामुपकृतवन्तोऽत्र ग्रन्थप्रणयने । एवं मगध-विश्वविद्यालये स्नातकोत्तरविभागे हिन्दीविषये प्राध्यापकान् सम्प्रति सेवाविरतानपि राजवंशसहायहीरामहाभागानपि सादरं स्मरामि, यतोहि तेऽपि मामुपाकर्षुरत्र । इत्थं साहित्यादिशास्त्रसाक्षादवतारभूतां दर्शितज्येष्ठभगिनीस्नेहां गुरुं का० सि० द० सं० वि० विद्यालये साहित्यविभाग उपाचार्यां डॉ० मीनाकुमारीमहाशयामपि नौमि यस्या मयि सम्प्रत्यपि स्नेहातिशयः । अन्ते मातरं स्वस्थां विन्ध्यवासिनीं देवीं पितरं हजारीबागमण्डलान्तर्गत चपरखाभिधावसथवासिनं हृत्संधृतरामचन्द्रं श्रीवैद्यनाथशर्माणं पितृदेशीयं पितुरप्यधिकस्नेहदातारं हिन्दीप्रणीतनैककाव्यग्रन्थं निबद्धानेकनिबन्धं सुशीलोपनामकं श्रीशिवकुमार शर्माणमग्रजं मातृकल्पां स्निग्धां महनीयां महाशयां दमयन्तीं देवीं प्रजावतीं च नामं नामं गुरुचरणान् श्रीरङ्गेश्वरनाथमिश्रान् प्रति प्रार्थयते—

"नानाग्रन्थसमाहृतार्थघटनालब्धस्वरूपं नवं
श्रीरङ्गेश्वरनाथमिश्र ! भवतः पाणौ प्रदत्तं मया ।
एतद् ग्रन्थसुमं सदा सुमनसां सौख्यावहं जायतां
यत् किञ्चित् सर्वत्र गच्छति हृदा प्रत्तं गुरौ ब्रह्मणि ।"

इति विद्वच्चरणचञ्चरीको रामकुमार शर्मा

ज० ना० व्र० आदर्शसंस्कृतमहाविद्यालयः, रामभद्रपुर-लगमा, दरभङ्ग । विहारः ।

# विषयानुक्रमणिका

## प्रथमोध्याय:

# काव्यलक्षण-कारण-भेद-विषयेषु तुलना

विदितमेव विद्याविभावदातान्त:क्ररणानां विपश्चितां यत् काव्यप्रकाशकारस्य मम्मटस्य "तददोषौ शब्दार्थौं सगुणावनलङ्कृती पुन: क्वापि" इतिकाव्यलक्षणं विश्वनाथपण्डितराजप्रभृतिपण्डितै: कटाक्षितम्। लक्षणस्याक्षरसंख्यातोऽपि द्विगुणा दोषा: प्रत्ता:। एषां दोषाणामुद्धारश्च मम्मटपक्षपातिभि र्नानामनीषिभि: क्लिष्टकल्पनाभिरकारि। पुनर्विश्वनाथ-पण्डितराजादिमतमेवाऽलङ्कुर्वद्भिर्विपश्चिद्भिस्तद्दोषोद्धार एव दूषित:। एषां विवदमानानां विपश्चितां विवादा नचिरादेव प्रदर्शयिष्यन्ते। सम्प्रति मम्मटपण्डितराजयो: काव्यलक्षण-विषये विचार: प्रदर्श्यते—

**काव्यलक्षणाविषये तुलना :**

"तददोषौ शब्दार्थौं सगुणावनलङ्कृती पुन: क्वापि" इति मम्मट:।

"रमणीयार्थप्रतिपादक: शब्द: काव्यम्" इति पण्डितराज:।

**मम्मटकाव्यलक्षण-विमर्श:**

मम्मटलक्षणस्थेन तदा पूर्वप्रकान्तलक्ष्यकाव्यस्य परामर्श:। ततश्च शब्दार्थौं तद् काव्यमित्यायाति। केचिद् व्याचक्षते यल्लक्ष्यतावच्छेदकं काव्यत्वं शब्दार्थयो: प्रत्येकपर्याप्तम्। आस्वादोद्बोधकत्वस्य काव्यत्वप्रयोजकस्योभयत्र सत्त्वात्। "काव्यं श्रुतं, काव्यं बुद्धम्" इत्याद्युभयविधव्यवहारदर्शनाच्च। ततश्च दोषाभाव-गुणालंकार-विशिष्ट: क्वचिच्छन्द:क्वचिच्चार्थश्च काव्यमित्यायाति। अन्य आहुर्यन्मिलितावेव शब्दार्थौं काव्यम्, काव्यत्वं शब्दार्थयोर्व्यासक्तमिति यावत्। "शब्दोऽवाऽर्थो वेति" "शब्दार्थौं" इति पदस्य विग्रहो न समीचीन:। किन्तु "शब्दश्चार्थश्चेति" विग्रहो न्याय्य:। अन्यथा "माता पितृभ्यां नम:" इत्यत्र नमसो मातापित्रोरन्यतरेण सम्बन्ध: स्यात्। तस्मान्मिलितौ शब्दार्थौं काव्यमिति फलितम्।

ईदृशो विचारः साहित्यदर्पणस्य रुचिराटीकायां प्रदर्शितः।[१] "शब्दार्थयुगलं काव्यमित्युच्यते, इति यावत्। आस्वादव्यञ्जकत्वस्योभयत्राप्यविशेषात्। प्रागुक्तलक्ष्यतावच्छेदकस्योभय-वृत्तित्वाच्चेति वामनीटीकाकारः।[२]" काव्यत्वस्योभयवृत्तित्वात्, कविप्रौढोक्तिकल्पितत्वस्यार्थ एव सत्वात्, अर्थचित्रस्याभ्यर्हितत्वाच्चार्थविशिष्टशब्दस्यैव काव्यत्वानौचित्याच्च शब्दार्थोभयोपादानम्। "नामरूपे व्याकरवाणि" इति वैदिके "वागर्थाविव" इति लौकिके वाक्ये च शब्दस्य पूर्वप्रयोगदर्शनाल्लक्षणे शब्दस्य प्रागुपादानमिति प्रदीपप्रभाकृतो वैद्यनाथस्याशयः।"[३] शब्दार्थौ शब्दार्थ युगलं तत् काव्यमिति" नागेश्वरीटीकाकृत्।[४]

**पण्डितराजस्याक्षेपः—**

शब्दार्थौ न काव्य-पदवाच्यौ। काव्यपदनिष्ठशब्दार्थोभयनिरूपितशक्तेर्ग्राहकस्य प्रमाणस्याऽभावात्। "काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते" इत्यादि विश्वजनीनेन शक्ति ग्राहकशिरोमणिना व्यवहारेण काव्यपदे शब्दविशेष निरूपितशक्तेः सिद्धत्वाच्च। पठनं शब्दस्यैव। "काव्याद् अर्थोऽवगम्यते" इति व्यवहारेण काव्यार्थयोर्भेदः सिद्धः। न च "काव्यमुच्चैः पठ्यते" इत्यादयो व्यवहाराः शब्दमात्रे लक्षणयोपपादनीया इति वाच्यम्", शब्दार्थयुगले काव्यपदशक्तेः साधकस्य दृढतरप्रमाणस्याऽभावात्। शक्त्यपरपर्यायायामभिधायां बाधितायामेव लक्षणाप्रवृत्तेश्च। न हि शक्तिवेद्यमुख्यार्थबाधमन्तरा लक्षणा क्वचित् प्रवर्तते। न च" तददोषौ..." इत्यादि वाक्यमेव काव्यशब्दस्य शब्दार्थयुगले शक्तेः साधकं शब्दप्रमाणमिति वाच्यम्, अस्य वाक्यस्य विमतकथितत्वेनाऽश्रद्धेयत्त्वात्। इत्थं

---

१. अत्र केचिदाहुः—शब्दो चार्थो वा दोषशून्यत्वे सति गुणविशष्टत्वे सति क्वचित् सालंकारः काव्यम्, न तु तदुभयं मिलितमेव, आस्वादव्यञ्जकताया उभयत्राप्यविशेषात्। श्रुतं काव्यं, बुद्धं काव्यमित्युभयविधव्यवहार दर्शनाच्च। इति। अन्ये तु नात्र शब्दो वाऽर्थो वेति शब्दार्थौ, किन्तु शब्दश्चार्थश्चेति शब्दार्थौ।_अन्यथा' माता पितृभ्यां जगतो नमः" इत्यादावपि नमसोऽपि मातापित्रोरन्यतरेण सम्बन्धः स्यात्। तदुक्तं तर्कालंकारैः—"सहृदयश्लाघ्यौ शब्दार्थौ काव्यम्। सहृदयैः श्लाघ्यते यः शब्दोऽर्थश्च तदुभयं मिलितं काव्यम्॥" इति।—सा० द० रू० टी० १-,पृ० सं०

२. वही, पृ० सं० १३।

३. पृ० सं० ८।

४. पृ० सं० ७।

व्यवहारतः काव्यपदस्य शक्तिः शब्दविशेष एव सिद्ध्यति । अतो व्यवहारसिद्ध-काव्यपदार्थस्य लक्षणं युक्तम्, न तु स्वकल्पितस्य काव्यपदार्थस्य । एवं वेदपुराणादिशब्दानां शब्दविशेष एव शक्तिः ।

न चास्वादव्यंजकत्वस्य काव्यत्वप्रयोजकस्योभयत्राविशिष्टतया शब्दार्थयोः काव्यत्वं सिद्धमिति वाच्यम्, आस्वादोद्बोधकत्वे काव्यत्व प्रयोजके स्वीकृते ध्वनिकाराऽऽनन्दवर्धनादिसकलालंकारिक-स्वीकृत-रसव्यञ्जकत्वानां संगीतशास्त्रप्रसिद्धानां भैरवादि संज्ञकानां रागाणां रसव्यञ्जकानां सर्वेषां च प्रायो भरतोक्तानामातोद्याङ्गहारकरणादीनां नाट्याङ्गानां च प्रकृते लक्षणीयत्वापत्तेः । किञ्च काव्यत्वं शब्दार्थयोर्न व्यासक्तम् । "एको न द्वौ" इति व्यवहारस्येव "श्लोक वाक्यं न काव्यम्" इति व्यवहारस्यापत्तेः । श्लोकवाक्यस्याकाव्यत्वं लोकविरुद्धम् । न च तत् प्रत्येक पर्याप्तमिति वाच्यम्, एकस्मिन् "शयिता सविधे" इत्यादिकाव्ये शब्दांशमर्थांश चादाय काव्यद्वयव्यवहारापत्तेः । अतो वेदादिलक्षणस्यैव काव्यलक्षणस्यापि शब्दनिष्ठतैवोचिता । अतो रमणीयार्थं प्रतिपादकः शब्द एव काव्यम् ।

**अस्याक्षेपस्य निराकरणम्:—**

वेदादिशब्दनिष्ठा शक्तिः शब्दार्थोभयनिरूपिता । शब्दार्थोभयनिरूपितशक्तेर्ग्राहकं प्रमाणं व्याकरणम् । "तदधीते तद्वेद" इति सूत्रस्थं भाष्यं[1] वेदादिशब्दाना मुभयपरतां प्रतिपादयति । एवं काव्यपदनिष्ठाऽपि शक्तिः शब्दार्थोभयनिरूपिता स्वीकार्या । एवं शब्दार्थोभयनिरूपितायां काव्यपदनिष्ठायां शक्तौ सिद्धायां शब्दमात्रपराः "श्लोकवाक्यं काव्यम्" इत्यादयो व्यवहाराः "पूर्वे पंचालाः" इत्यादिव्यवहारवल्लक्षणयोपपादनीयाः । एतेन काव्यशब्दशक्तेः शब्दार्थयुगले ग्राहकस्य प्रबल प्रमाणस्याऽभाव इति पण्डितराजाशय· प्रत्याख्यातः । इत्थं गुरुमर्मप्रकाशकृतां नागेशभट्टानामाशयः ।[2] "काव्यं श्रुतम्" इति व्यवहारो यथा काव्यत्वं शब्दनिष्ठं

---

१. तदधीते तद्वेद । किमर्थमुभावप्यर्थौ निर्दिश्येते । न योऽधीते वेत्यप्यसौ । यस्तु वेत्यधीतेऽप्यसौ, नैतयोगावश्यकः समावेशः । भवति हि कश्चित् सम्पाठं पठति न वेत्ति, तथा कश्चिद् वेत्ति, न च सप्पाठं पठति ।

२. श्रुतं काव्यम्, बुद्धं काव्यमित्युभयविधव्यवहारदर्शनाच्च काव्यपदप्रवृत्तिनिमित्तं व्यासज्यवृत्ति । अतएव वेदत्वादेरुभयवृत्तित्वप्रतिपादकः तदधीते तद्वेद इत्यादि सूत्रस्थो भगवान् पतंजलिः । —गु० म० प्र०, पृ० सं० ७ ।

साधयति तथा "काव्यं बुद्धम्" इति व्यवहारोऽर्थनिष्ठम्। अर्थस्यैव प्राधान्येन बोधात्। एवं व्याकरण-व्यवहाराभ्यां काव्यत्वं व्यासज्यवृत्ति सिद्ध्यति।

यद्यपि कविकर्म काव्यमिति व्युत्पत्तिबलात् काव्यपदार्थश्शब्द एव सिद्ध्यति, शब्दस्यैव कर्मत्वात् तथापि योगरूढिरंगीकार्या काव्यपदे। अथवा कविकर्मपदघटककर्मपदेन प्रथम-प्रकाश्यमेव कर्म बोध्यते। अतएव "यद्यप्यर्थो न कविकर्म, तथापि प्रथमप्रकाश्यमेवात्र कर्माभिधीयते। अन्यथा शब्दनित्यतावादे मौनिना लिखित्वा ज्ञापिते च शब्देऽपि काव्यत्वं न स्यात्" इत्याहुः काव्यप्रकाशटीकाकारा गोकुल नाथ चरणाः। लोकोत्तरचमत्कारव्यंजकतयाऽर्थविशिष्टः शब्द इव शब्दविशिष्टोऽर्थः काव्यम्। अतएव काव्यप्रकाशे शब्दार्थयोः प्राधान्येन निर्देशः। अन्यतरस्य गुणप्रधानभावे विनिगमनाविरहात्। "काव्यं श्रुतम्" इति व्यवहारोऽर्थांशेऽपि शब्दबोध-निरूपितवृत्तिमता श्रृणोतिनोपपादयितुं शक्यः। रागेऽतिव्याप्तिवारणाय काव्यप्रकाश काव्यलक्षणे "अर्थः" नाट्यांगेषु च तद्-वारणार्थं शब्द उपात्तौ। रागश्शब्दात्मकः। नहि तत्रार्थापेक्षा। अनाकलितार्थोऽपि जनो रागेण चमत्कारमनुभवति। नाट्याङ्गानि न शब्दस्वरूपाणि। अतो न तत्रापि लक्षणाति व्याप्तिः। एवं गोकुलनाथचरणानांमतम्।[१]" अत आस्वादोद्बोधकत्वस्य काव्यत्वप्रयोजकत्वस्वीकार-पक्षे पण्डितराजप्रत्तं दूषणं निरस्तम्।

लक्षणस्थत्पदपरामृष्टकाव्य निष्ठविधेयतानिरूपितोद्देश्यता शब्दार्थयुगलेविद्यते। न तु तयोरन्यतरस्मिन्। लोकोत्तरवर्णनानिपुण-कवि-कर्मताया उभयत्राऽविशेषात्। लोकोत्तरवर्णनानिपुणकविकर्तृकोच्चारणकर्मता शब्दे तादृशकवि-समवेत-रसबोधौपयिक-सामग्रीसंघटनविषयकज्ञान-कर्मता चार्थे समानैव। अर्थपदेन वाच्य-लक्ष्य-व्यंग्यानां विविधानामर्थानां शब्दपदेन च तथाविधानां वाचक-लक्षक-व्यंजकानां शब्दानां ग्रहणम्। एवं कविकर्तृकरसविषयकज्ञानौपयिकसामग्रीसंघटनविषयक-ज्ञानविषयत्वं काव्यत्वं शब्दार्थयोरनुगतमिति सिद्ध्यति। "अर्थोऽपि व्यंजकस्तत्र सहकारितया मतः" इत्यादिना शब्दार्थयोरुक्त-सामग्री-घटकता सूपपादा। एवं लास्यांगेषु न काव्य-लक्षणाति प्रसंगः, तेषु कविकर्तृकप्रोक्तज्ञानविषयताया असत्त्वात्। लास्यांगानि विषयान्तर-समासक्तमनसां

---

१. रसवच्छब्दार्थोभयत्वं काव्यलक्षणम्। तत्र गीतादावतिव्याप्ति-वारणायार्थः, अभिनेयार्थवारणाय शब्दोऽप्युपात्तः। —रसगंगाधर चन्द्रिका-व्याख्यायाम्, पृ० सं० २०।

सामाजिकानां तत्तद्विषयाभिमुख्यपरिहारपूर्वकं काव्यार्थभावनायां प्रवणतायाः सम्पादकत्वेन सन्तु नाम परम्परया रसोद्बोधं प्रति प्रयोजकानि।

शब्दमात्रे काव्येऽर्थगतानां दोषगुणालङ्काराणां निरूपणं समुचितं न स्यात्। न च रसोपयोगितामात्रेण तन्निरूपणमुचितमिति वाच्यम्, काव्यांगनिरूपणं प्रतिज्ञाय काव्यानङ्गानामर्थगुणालंकाराणां निरुपणस्यानुचितत्वात्। इत्थमाशयो महामहोपाध्यायानां गंगाधरशास्त्रिणाम्।[१]

इत्थमेते मनीषिणः पण्डितराजाक्षेपं यथाशक्ति निरस्य "शब्दार्थौ काव्यम्" इति मम्मटमतं समर्थयामासुः। अधोलिखितानि प्राचीनाचार्यकाव्यलक्षणानि मम्मटानुकूलानि—

"शब्दार्थौ सहितौ काव्यं गद्यं पद्यं च तद्द्विधा[२]"

"काव्यशब्दोऽयं गुणालंकार-संस्कृतयोः शब्दार्थयो वर्तते।"[३]

"शब्दार्थौ काव्यम्।[४]"

"अदोषौ सगुणौ सालंकारौ च शब्दार्थौ काव्यम्।"[५]

"शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालंकारौ च काव्यम्।"[६]

"गुणालंकारसहितौ शब्दार्थौ दोषवर्जितौ।"[७]

"शब्दार्थौ वपुरस्य तत्र विबुधैरात्माभ्यधायि ध्वनिः"[८]

"शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली।"[९]

---

१. तत्रैव, पृ० सं० २१।
२. भामह, १, १६।
३. वामन, १, १।
४. रुद्रटः काव्यालंकारे, २, १।
५. हेमचन्द्रः
६. वाग्भटः
७. विद्यानाथः
८. दण्डी।
९. दण्डी।

अत्र लक्षणे व्यवच्छिन्नत्वं समुच्चितत्वम्, न त्ववच्छिन्नत्वमिति गोकुलनाथ चरणाः ।[१] तेन रसवच्छब्दार्थोभयत्वं काव्यत्वमिति दण्डिनोऽपि मतम् । काव्यमीमांसाकारो राजशेखरः काव्यं पुरुषस्वरूपेण निरूपयामास । सोऽलिखत्—

"शब्दार्थौ ते शरीरम्, संस्कृतं मुखम्, प्राकृतं बाहुः, जघनमपभ्रंशः, पैशाचं पादौ, उरो मिश्रम्...त्वामलंकुर्वन्ति ।"

वक्रोक्तिजीवितकारः कुन्तकोऽपि सहितावेव शब्दार्थौ काव्यं स्वीचकार । शब्दार्थयोरन्यूनानतिरिक्त-चमत्कार-जनकत्वं प्रोक्तम् ।

**"शब्दार्थौ सहितौ वक्र**
**कविव्यापारशालिनि ।**
**बन्धे व्यवस्थितौ काव्यं**
**तद्विद्वाह्लादकारिणि ।"[२]**

कुन्तकः स्वकीये वक्रोक्तिजीविते शब्दार्थयोः साहित्यं स्पष्टं निरूपयामास । एतन्निरूपणं विलोकनीयमास्ते ।[३] इत्थं काव्यत्वं शब्दार्थयोर्व्यासक्तमिति सिद्धम् ।

मम्मटेन सदोषे निर्गुणे निरलंकङ्रे चाति व्याप्तिवारणाय क्रमशः शब्दार्थयोस्त्रीणि विशेषणानि प्रत्तानि—'अदोषौ, सगुणौ, अनलंकृती पुनः क्वापि' इति ।

**अदोषाविति विशेषणार्थ-विमर्शः—**

न दोषो ययोस्तौ शब्दार्थावदौषौ । तावेव काव्यम् । अत्र नञा शब्दार्थयो दोंष-सामान्यस्याऽभावो विवक्षितः, दोषविशेषस्य वेति विचारणीयमास्ते । दोषसामान्याभावे विवक्षिते 'निश्शेषच्युतचन्दनं स्तनतटम्' इत्यादावुत्तमकाव्येऽविमृष्टवि-

---

१. तत्र व्यवच्छेदः समुच्चयः, न स्ववच्छिन्नत्वम् । विनिगमनाविरहात् । (रसगङ्गाधरचन्द्रिकायाम् पृ-० सं० २०

२. व० जी०,७,कारिका

३. शब्दार्थौ सहितावेव प्रतीतौ स्फुरतः सदा ।
सहिताविति तावेव किमपूर्वं विधीयते ॥
साहित्यमनयोः शोभाशालितां प्रति काप्यसौ ।
अन्यूनानतिरिक्तत्वं मनोहारिण्यवस्थितिः ।"—व० जी०,१,१६,१७ कारिके ।

धेयांशस्य दोषस्य सत्त्वेन काव्यलक्षणाव्याप्तिः। तत्र श्लोकेऽनुवाद्यस्य स्तनतटस्य विधेयस्य च निश्शेषच्युतचन्दनत्वस्य पश्चात् प्राक् च प्रतिपादनेन स्पष्ट एव विधेयाविमर्शः। यतः "अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्' इति नियमः। एतन्नियमोल्लङ्घनमेव विधेयाविमर्शः। किञ्च दोषसामान्याभावे विवक्षिते काव्यं प्रविरलविषयं निर्विषयं वा स्यात्। दोषविशेषाभावे विवक्षितेऽसाधावपि काव्यलक्षणातिप्रसंगः, तत्रापि कस्यचिद्दोषस्याभावात्। वस्तुतो दोषसामान्याभाव एव विवक्षितः। काव्यस्य प्रविरलविषयत्वमिष्टमेव। पदमात्रस्यापि निर्दोषत्वसम्भवेन न काव्यस्य निर्विषयत्वम्, निश्शेषेत्यादावुत्तमत्वप्रयोजकस्य प्रधानव्यंग्यकृतचमत्काररूप धर्मस्योदाहृतत्वान्न विरोधः। एवं नरसिंहहठक्कुरस्य मतम्।[1] केचिद्वदन्ति यन्निश्शेषेत्यादौ विधेयाविमर्शदूषितभागं परित्यज्य भागान्तरोदाहरण एव तात्पर्यम्।

अदोषाविति विशेषणेन दोषविशेषाभाव एव विवक्षितः। अतो काव्यत्वविघटका ये च्युतसंस्कृतित्व-प्रभृतयो दोषास्तद्ररहितौ शब्दार्थौ काव्यमिति फलितम्। वाच्यार्थ-प्रतीत्यनन्तरमेव व्यंग्यार्थप्रतिपदिति ध्वन्यालोककार आह।[2] च्युतसंस्कारत्वादयो दोषा वाच्यार्थज्ञानविघातका भवन्ति, येन काव्यात्मभूतध्वनेः प्रतीतिर्नभवति। अत एतादृशा ये काव्यत्वविघटका दोषास्तेषामेवाभावोऽत्र विवक्षितः। न पुनरन्येषां काव्य-सामान्य-दोषाणां रसापकर्षकाणां विधेयाविमर्शादीनामप्यभावः। अतो विधेयाविमर्शदोषदुष्टेपि "न्यक्कारो ह्यमेव" इत्यादिपद्ये निश्शेषेत्यादिपद्ये च काव्यत्वमिष्टमेव। नहि विधेयाऽविमर्शो वाच्यार्थप्रतीतिविघातकः। अनुभवबलात्। अतएव वामनीटीकाकारेण 'दोषत्वम्, उद्देश्यप्रतीति-प्रतिबन्धकत्वम्'इति प्रोक्तम्। काव्यप्रकाश विवरणकारोऽप्येमेवाह—"केचित्तु" अदोषाविति च्युतसंस्कृत्यभवन्मतयोगक्लिष्टत्वादयो ये शाब्दबोधविघटका दोषास्तत्सामान्याभाववन्तावित्यर्थः। एते रसबोधप्रतिबन्धकाः। दोषान्तरं तु काव्यापकर्षकम्।"[3] च्युतसंस्कृत्यादीनां रसबोधप्रतिबन्धकत्वं खण्डयन् शिवदत कविरत्न आह यदेषां सर्वेषां रसबोध-प्रतिबन्धकता नोचिता।

---

१. द्रष्टव्यम्, वा० टी०, पृ० सं० १४॥

२. यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते।
वाच्यार्थ पूर्विका तद्वत् प्रतिपत्तस्य वस्तुनः॥ —ध्व० लो० १, उ० १०, कारिका।

३. द्रष्टव्यम्, सा० द० रू० टी०, पृ० सं० १४।

"धन्याऽसि या कथयसि प्रिय-संगमेऽपि,
विस्रब्ध-चाटुशतकानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः ! शपामि यदि किञ्चिदपि स्मरामि"

इति पद्ये"शपामि" इत्यत्र च्युतसंस्कृतित्वदोषस्य, "नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः" इत्यत्र च अञ्जनस्यात्यन्ताभावबोधार्थं प्रयुक्तस्य "दूरम्" इत्यस्य समासे गुणीभूतेन नञा सहान्वयेनाऽभवन्मतयोगत्वदोषस्य सत्वेऽपि वाच्यार्थ-बोधसम्भवेन रसबोधप्रतिबन्धाभावात् ।[१]

वस्तुतस्तु "शपामि" इत्यत्र न च्युतसंस्कृतित्वदोषः । "शप उपसम्भने" इति वार्तिकेनात्राऽऽत्मनेपदस्याप्राप्तेः । उपलम्भनं प्रकाशनम् । यत्र शपथेन स्वाभिप्रायप्र-काशनं तत्रैवानेन वार्तिकेन आत्मनेपदम् । यथा "कृष्णाय शपते" इत्यादौ । अत्र तु शपथमात्रं विवक्षितम्, न तु तत्करणकं प्रकाशनम् । अतो नात्रात्मनेपदप्राप्तिः । "शप उपालम्भे" इति पाठस्तु कौमुद्यां वृत्तिग्रन्थानुरोधेन, इत्थमाह शब्देन्दुशेखरे नागे-शः ।[२] यद्यपि "शप उपलम्भने" इतिवार्तिकेनात्मनेपदं प्राप्नोति तथापि शपथ कर-णक-प्रकाशनविवक्षाभावान्न तत्प्रवृत्तिः "इत्युद्योते स एवाऽऽह ।" सख्यः शपामि भवदङ्गं स्पृशामि । अत्र शपथस्यामुख्यत्वादात्मनेपदाभावः"इति सुधासागरकार-वचनम् ।[३]

एवं "नेत्रे दूरमनञ्जने" इत्यादावपि नाभवन्मततयोगत्वदोषः । दूरमित्यस्य कज्जलात्यन्तासत्व-बोधनार्थमप्रयुक्तत्वात् । दूरमित्यस्य प्रान्तभाग एवार्थः । अत-एव पद्यमेनद् व्याख्यान् वामनः "नेत्रे चक्षुषी दूरं प्रान्तभागे, एव अनञ्जने कज्जलरहिते" इत्याह ।[४]

---

१. तत्रैव ।

२ परे तु "शप उपलम्भने अनेनात्मनेपदम् । भाष्ये उपलम्भन इत्येव पाठदर्शनात् । उपलम्भनं प्रकाशनम् । धातोः शपथकरणकप्रकाशने वृत्तौ तङ्तात्पर्य-ग्राहकः । शपथश्च लोकप्रसिद्ध एव । अत एवोदाहरणे देवदत्तायेत्यत्र चतुर्थ्येव भाष्ये प्रयुक्ता ।" सख्यः शपामि यदि किञ्चदपि स्मरामि "इत्यादौ शपथमात्रं विवक्षितं न तु प्रकाशनम् ।" शब्देन्दुशेखरः ।

३. द्रष्टव्यम्, वा० टी०, पृ० सं० १३७ ।

४. तत्रैव, पृ० सं० २० ।

एवं काव्यत्वविघातकदोषरहितौ शब्दार्थौ काव्यमिति निष्कर्षः।

**सगुणाविति विशेषणार्थविमर्शः—**

सगुणौ माधुर्यौजःप्रसादाख्य-गुणत्रय-समन्वितो शब्दार्थौ काव्यम्। गुणानां रसमात्रनिष्ठत्वेऽपि स्वव्यञ्जकत्वसम्बन्धेन शब्दार्थनिष्ठत्वं बोध्यम्। अतएव "गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता।" इति स्वयमेव मम्मटोऽष्टमोल्लास आह। एतेन विशेषणेन शब्दार्थयोः सरसत्वमपि सिद्धम्। गुणसत्त्वे रसस्य रससत्त्वे गुणस्य च स्थितेरवश्यम्भावात्। गुणशब्दोऽत्र गुणाभिव्यंजकशब्दार्थपरः।[१]" तेन गुणाभिव्यञ्जकौ शब्दार्थौ, इति फलितम्। अतो नीरसे नातिव्याप्तिः।

**अनलंकृती इति विशेषणार्थ विमर्शः—**

न अलंकृतिरलंकारो ययोस्तौ। इदं विशेषणं न लक्षणघटकम्। अपि तु सालंकारावितिविशेषणस्य ग्राहकम्। इत्थं विवरणकारमतम्। "अनलङ्कृती" इत्यत्र नञ् ईषदर्थकः। यथा "अलवणा यवागूः अनुदरा कन्या इत्यादौ। नञर्थविषये प्रोक्तमभियुक्तैः—

**"तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता।**

**अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः॥"**

ईषत्त्वं चास्फुटत्वम्। अस्फुटत्वं च सहृदयै झगिति अग्राह्यत्वम्। ततश्च "क्वापि" इत्यनेन इदं प्रोक्तं यत् सर्वत्र सालङ्कारौ क्वचिद् रसस्थले स्फुटालंकार-रहितावपि शब्दार्थौ काव्यम्।

चमत्कार-प्राणं काव्यमिति विदितमेव विपश्चिताम्।तत्र चमत्कार-हेतू रसश्चालंकारश्च। यत्र रसस्थिति स्तत्र न स्फुटालंकारापेक्षा। यत्र च तदभावस्तत्र स्फुटालंकार आवश्यकः। अन्यथा तत्र चमत्कारो न स्यात्। रसस्थितिस्थले स्फुटालंकराविरहेऽपि चमत्कारातिशयो ध्वनिकारेणोक्तः।[२]यथा—

**"मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।**

**येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥"**

---

१. गुणस्य रसनिष्ठत्वेऽपि तद्व्यञ्जकपरं गुणपदम्। —का० प्रदी०, पृ० सं० ८।

२. अतएव च रसानुगुणार्थविशेषोपनिबन्धनमलंकारविरहेऽपिच्छायातिशययोगि लक्ष्ये दृश्यते।"—ध्व० लो० ४,उ० पृ० सं० ५५७।

इत्यत्राऽद्भुतरसानुकूलमेकचुलुके मत्स्यकच्छपदर्शनं चमत्कारातिशयं जनयति। यदि निरलंकारे रसवति न काव्यत्वस्वीकारस्तर्हि "सालंकारत्वे सति" इति विशेषणं पूरणीयम्। एवमाशयः काव्यप्रदीपकाराणां गोविन्दठक्कुराणाम्।[1]

एवं मम्मटमते काव्यत्वविधातकदोषरहितौ सगुणौ (सरसौ) क्वचित् रसस्थले स्फुटालंकाररहितावपि सालंकारौ शब्दार्थौ काव्यमिति लक्षणार्थः।

मम्मटकाव्यलक्षणे कृते गुणालंकारदोषाभावनिवेशे पण्डितराजस्याक्षेपः—

काव्य-सामान्य-लक्षणे गुणालंकारनिवेशोऽनुचितः। गुणालंकारविरहवति "उदितं मण्डलं विधोः" इतिस्वरूपे दूत्यभिसारिकाविरहिण्यादि-कथितेऽभिसार-विधिनिषेध-जीवनाभावादिवस्तुव्यंजके पद्ये "यतोऽस्तमर्कः" इत्यादौ च काव्यलक्षणाव्याप्तेः। न चोदितं मण्डलं विधोरित्याद्यकाव्यम्, पराभिमतस्यापि काव्यस्य तथा वक्तुं शक्यत्वात्। काव्यजीवितं चमत्कारः। च चात्र विद्यत एव। ततः 'उदितं मण्डलं विधोः' इत्यादिकथमकाव्यं स्यात् गुणानामलंकाराणां च संख्या अनिर्धारिताः। वामनेन विंशतिः भामहेन च त्रयो गुणा उक्ताः। प्रायः समेषामालंकारिकाणां नयेऽलंकार-संख्या विषये विवाद एव विलोक्यते। अतो गुणत्वालंकरणत्व-योरननुगमः स्पष्ट एव। एवं दोषाभाव-निवेशोऽपि निष्फल एव, सदोषयोरपि शब्दार्थयोः काव्यत्वस्य स्वीकारात्। तत्र काव्यत्वस्वीकारे "दुष्टं काव्यम्" इति व्यवहार एव प्रमाणम्। न चास्य व्यवहारस्य लाक्षणिकत्वम्, बाधकं विना लाक्षणिकत्वायोगात्। दोषस्यापि स्वरूपं तद्भेदाश्चाऽनिर्धारितमेव। अतोऽननुगमोऽत्रापि स्पष्टः। ननु यथा तार्किका मूलावच्छेदेन पक्षिसंयोगं शाखावच्छेदेन च तदभावमवगम्य तत्र वृक्षेऽव्याप्यवृत्तिं मत्वा "पक्षिसंयोगवान् वृक्षः पक्षि संयोगाभाववान्" इति व्यवहरन्ति तथा यत्किञ्चिदंसे दोषवत्वं यत्किञ्चिदंशे च दोषाभावं स्वीकृत्याऽव्याप्यवृत्तिं दोषाभावमङ्गीकृत्य "दुष्टं काव्यम्" इति व्यवहार उपपद्यत इति चेत्, न, "मूले महीरुहो विहङ्गमसंयोगो, न शाखायामिति विश्वजनीनानुभववत्" इदं पद्यं पूर्वांशे दोषवत्, उत्तरांशे तु तदभाववदतः काव्यम्" इति सम्यगनुभवस्य विश्वजनीनस्य विरहेण अव्याप्यवृत्तिताया अपि तस्यायोगात्। शौर्यादिवदात्मधर्माणां गुणानां कटकादि-वदुपस्कारकाणामलङ्काराणां च शब्दार्थ-शरीर-घटकत्वं नोपपद्यते। अतो गुणालंकारादिनिवेशोऽनुचितः।

---

१. द्रष्टव्यम्, का० प्रदी०, पृ० सं० ८,९।

**एतदाक्षेपनिराकरणम्ः—**

प्रदीपकारमते नीरसानां निरलंकाराणाम् "उदितं मण्डलं विधोः, गतोऽस्तमर्कः" इत्यादिरूपाणां न काव्यत्वम् । अत्र चमत्कार-जनकस्य रसस्यालंकारस्य वाऽभावात् ।[१] काव्यप्रकाशकारकृतेऽनुपहसनीयकाव्य लक्षणे गुणालंकारयो र्निवेश आवश्यक एव । गुणालंकारयुक्तं काव्यं कदापि नोपहसनीयं भवति । नागेशनापि कथितं यन्मम्मटस्य लक्षणमनुपहसनीयकाव्यस्यास्ति ।[२] गुणालंकाराभावे विच्छित्ति-विशेषाभावात् काव्यत्वं न भवितुमर्हति । विच्छित्ति-विशेषाभावेऽपि काव्यत्वे स्वीकृते वास्तविक-वृत्तान्त-वर्णनपरेभ्य इतिहासादिभ्यः काव्यस्य भेदो न स्यात् । अतएव ध्वनिकृता "नहि कवेरिति-वृत्तमात्रवर्णनेनात्मलाभः, इतिहासादेरेव तत्सिद्धेः" इति प्रोक्तम् । शौर्यादिवदात्म-धर्माणां गुणानां हारादिवच्छरीरोपस्कारकाणामलंकाराणां च शब्दार्थ-शरीर-घटकत्वाभावकथनं लोकदृष्टान्तमनुसृत्यायुक्तमेव । अलौकिके काव्य-वस्तुनि लौकिको दृष्टान्तो नोपयुज्यते । अन्यथा काव्येऽपि लोके दुःखकाराणेभ्यो रामवनवासादिभ्यो दुःखोत्पत्तिः स्यात् । विभावादिनिमित्तकारणनाशे रसरूपकार्यनाशो लोकाननुगुणो नोपपद्येत । नहि लोके दण्डकुलालादिनाशे घटनाशो वलोक्यते । गुण-वृत्त्या गुणानां शब्दार्थनिष्ठत्वं युक्तमेव । निर्गुणयोः शब्दार्थयोरकाव्यत्वमिष्टमेव । "अचलस्थितयोगुणाः" इति वचनात् । रसवृत्तित्वे सति रसोपयोगित्वं गुणत्वम् "शब्दार्थान्यतर वृत्तित्वे सति परम्परया रसोपकारकत्वमलंकारत्वमिति गुणालंकारयोः सामान्यलक्षणेन एनयोरननुगमदोषोऽपि परिहृतः । स्फुटोऽलंकारश्चमत्कारी भवत्येव, अस्फुटोऽपि तथा । अदोषावित्यत्र नञोऽल्पार्थकस्य विवक्षित-प्रतीति-प्रतिबन्धकत्व एव पर्यवसानम् । तेन शब्दार्थयो रसादिविवक्षितार्थ-प्रतीति-प्रतिबन्धकानां च्युत-संस्कृतित्वाभवन्मतयोगत्वादीनामेव दोषाणामभावो विवक्षितः । अतोऽविवक्षितार्थ-प्रतीतिप्रतिबन्धकानां विधेयाविमर्शादीनां दोषाणां स्थिति-स्थले" "न्यक्कारो ह्यमेव मे" इत्यादौ काव्यत्वमिष्टमेव । तादृशमेव पद्यं "दुष्टं काव्यमिति" "व्यवहारस्य विषयः । दीर्घं त्वामनुनाथते कुचयुगम्" इत्यादौ तु काव्यत्वं नेष्टम्

१. वयं तु पश्यामः, नीरसे स्फुटालंकार-विरहिणि न काव्यत्वम्, —का० प्रदी०, पृ० सं० ८ ।

२. अनुपहसनीय-काव्यलक्षणस्य—तेनानुपहसनीयकाव्यलक्षणं प्रकाशोक्तं निर्बाधम् । —गु० म० प्र०, पृ० सं० ७ ।

वाच्यार्थ-प्रतीति-प्रतिबन्धेन व्यंग्यार्थप्रतीतेरपि प्रतिबन्धात्। अतो मम्मटोक्तं काव्य-लक्षणं निर्दुष्टमेवेति काव्यप्रकाशबद्धश्रद्धानां नानाक्लिष्टकल्पनानिरतानां विपश्चितां मतम्।

**पण्डितराजकाव्यलक्षणविमर्शः—**

"रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इत्यत्र लक्ष्यं काव्यम्। लक्ष्यतावच्छेदकं काव्यत्वम्। तच्च रमणीयार्थ-प्रतिपादकत्वे सति शब्दत्त्वम्। रमणीयार्थप्रतिपादके चेष्टाकटाक्षनिक्षेपादावतिव्याप्तिवारणार्थं शब्दशब्दोपादानम्। चेष्टादीनामशब्दात्मकत्वान्न तत्र लक्षणातिप्रसंगः। न च प्रतिपादकः शाब्दबोधजनकः प्रतिपत्तिश्च शाब्दबोध इति चेष्टादीनां शाब्दबोधजनकत्वाभावेन न तत्र लक्षणातिप्रसंग इति शब्दशब्दोपादानं व्यर्थमिति वाच्यम्, प्रतिपादक-प्रतिपत्तिपदयोः शाब्दबोधजनकत्व-शाब्दबोधरूपार्थविशेषपरत्वे मानाभावात्। शब्दशब्दोपादाने योग्यतावशात् प्रतिपादकपदस्य शाब्दबोधजनकपरत्वमिति त्वन्यत्। वाचक-लक्षक-व्यञ्जकानां सामान्यतया ग्रहणाय बोधजनकापरपर्यायस्य प्रतिपादकपदस्योपादानम्। "घटमानय, गां नय" इत्यादावतिव्याप्तिवारणार्थमर्थस्य रमणीयेति विशेषणम्। एतद्वाक्यस्थानां घटादिपदानां रमणीयार्थप्रतिपादकत्वाभावान्न लक्षणातिप्रसंगः। रमणीयशब्दप्रतिपादके व्याकरणेऽतिप्रसंगवारणार्थमर्थस्योपादानम्। ननु रमणीयार्थप्रतिपादके रमणीय-शब्दे लक्षणाति-प्रसंग इति चेत्, न, लोकोत्तराह्लाद-जनकज्ञान (भावना)-विषयस्यैवात्र रमणीयशब्देन विवक्षितत्वात्। तथा चोक्तम्—"रमणीयता च लोकोत्तरह्लादजनकज्ञानगोचरता। लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः।" पण्डितराजेन स्वयमेव स्वकीयं लक्षणं त्रिधा परिष्कृतम्—

**प्रथमः परिष्कारः—**

"चमत्कार जनकभावना विषयार्थ-प्रतिपादकशदत्वम् का व्यत्वम्" चमत्कारस्य लोकोत्तराह्लादस्य जनिका या पुनः-पुनरर्थानुसन्धानात्मकभावना, तस्या विषयोऽर्थस्तस्य प्रतिपादकस्य शब्दस्य भावः काव्यत्वम्। अत्र प्रागुक्तज्ञानपदं विहाय भावनापदोपादानस्येदं बीजम्—

यत्र कस्यचित् सहृदयस्य सामग्री-बलेन "शून्यं वासगृहम्" इत्यादिकाव्यार्थ-विषयकं "घटमानय" इति वाक्यार्थविषयकं च समूहालम्बनात्मकमेकमेव ज्ञान

मुत्पद्येत तत्र चमत्कारजनक-तत्सहृदयसमवेत-काव्यार्थविषयकज्ञान विषयताश्रयत्वसम्बन्धेन "घटमानय" इति वाक्यस्य घटादिपदानामपि काव्यत्वं चमत्कारजनक "शून्यं वासगृहम्" इत्यादिपद्यस्येव प्रसज्येत । अतो ज्ञानपदस्थाने भावना-पदोपादानम् । भावनानिवेशे तु तथा नातिप्रसंग: । भावनाया: स्मृतिरूपत्वेन समूहालम्बनात्मकत्वविरहादन्यविषयस्य तस्मिन् ज्ञाने न प्रवेश: । अत: प्रथमपरिष्कारस्य "लोकोत्तराह्लादनिष्ठजन्यतानिरूपित-जनकतावद्भावना-निष्ठविषयितानिरूपित-विषयतावदर्थप्रतिपादक: शब्द: काव्यम्" इति फलितार्थ: । काव्यार्थ-विषयकज्ञान-रूपायां भावनायामपि कदाचित् सामग्रीबलेन घटानयनस्यापि विषयत्वे प्रागुक्त-रीत्याऽतिव्याप्ति: स्थिरैवेति मनसि निधाय परिष्कारान्तरमाहा ।

**द्वितीय: परिष्कार:—**

"यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कार-जनकतावच्छेदकं तत्त्वं (शब्दत्वं) काव्यत्वम्" येन शब्देन प्रतिपादितो योऽर्थस्तद्विषयिणी या भावना तस्या भावो भावनात्वं चमत्कार-जनकताया अवच्छेदकं चमत्कारजनकतासमनियतं तत्त्वम् तस्य शब्दस्य भावस्तत्त्वं शब्दत्त्वं काव्यत्वमित्यक्षरार्थ: । अयं भाव:—

यत्प्रतिपादितार्थविषयिका: सर्वा भावना: चमत्कारजनिका: स एव शब्द: काव्यम् । घटानयनस्य नाना भावना भवन्ति । कदाचित् "शून्यं वासगृहम्" इत्यादिकाव्यार्थेन समम्, कदाचित् घटानयनमात्रविषया: कदाचिच्च काव्यार्थ-व्यतिरिक्तवस्त्वन्तरेण सह घटानयनविषया भावना भवन्ति । तत्र काव्यार्थेन सह जायमाना घटानयनविषया काव्यार्थविषयत्वेन चमत्कारिणा भवति । अन्याश्च न तथा एवं घटानयनस्य सर्वा भावना न चमत्कारजनिका: । "शून्यं वासगृहम्" इत्यादिकाव्यार्थ-विषया: सर्वा भावनाश्चमत्कारजनिका: । अतो "घटमानय" इत्यादि वाक्ये न काव्यलक्षणातिप्रसक्ति: ।

येन शब्देन प्रतिपादितोऽर्थस्तद्विषया: सर्वा भावनाश्चमत्कारजनिका इति तासु चमत्कारजनकता । यद्धर्मावच्छिन्ना जनकता स धर्मो जनकतावच्छेदक: । प्रकृते यत्प्रतिपादितार्थविषयकभावना चमत्कारजनिका । अतस्तादृशभावनानिष्ठ-यत्प्रतिपादितार्थविषयकभावनात्वरूपोधर्मश्चमत्कारजनकतावच्छेदक: । एवमस्यां भावनायां धर्मद्वयं विद्यते-यत्प्रतिपादितार्थविषयकत्वं भावनात्वं च । विषयकत्वपदार्थो विषयित्वम्, तच्च स्वरूपसम्बन्धेन भावनानिष्ठम् । तादृशोऽर्थश्च विषयिता सम्बन्धेन भावनावृत्ति: । प्रकृते भावनात्वस्य भावनावच्छेदकत्वेऽपि तस्य न लक्ष-

णघटकत्वम् । अतो न तस्य प्रवेशः । घटानयनाद्यर्थविषयभावनास्वपि भावनात्वस्य सत्त्वेन तस्य चमत्कार-जनकतावच्छेदकत्वं न युक्तम् । अन्यूनानतिरिक्तवृत्तिधर्म-स्यैवावच्छेदकत्वात् । अतोऽर्थ एव चमत्कार-जनकतावच्छेदकोऽत्र स्वीकार्यः । अतएव पण्डितराजस्तृतीये परिष्कारे अर्थमेवावच्छेदकं मतवान् । अर्थस्य भाव-नायां विषयिता-सम्बन्धेन वृत्तेरर्थनिष्ठावच्छेदकता विषयित्वसम्बन्धावच्छिन्ना । चमत्कारनिष्ठा जन्यता चमत्कारत्वावच्छिन्ना भावनावृत्तिचमत्कारजनकताया अव-च्छेदकोऽर्थ उक्त एव । अतश्चमत्कारत्वावच्छिन्न-जन्यतानिरूपित-भावनावृत्ति-जनकताऽवच्छेदकार्थनिष्ठ-प्रतिपाद्यतानिरूपित-प्रतिपादकताश्रय-शब्दत्वं काव्य-त्वमिति द्वितीय-परिष्कार-निष्कर्षः । इति रसचन्द्रिकाख्यरसगंगाधर-टीकाकाराणां केदारनाथ-ओझामहाशयानां मतस्य निष्कर्षः ।[१]

**तृतीयः परिष्कारः—**

"स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारत्वत्त्वं वा काव्यत्वम्" । स्वशब्देनात्र चमत्कारत्वं विवक्षितम् । अतः स्वविशिष्टश्चमत्कार-त्वावच्छिन्नो यश्चमत्कारस्तस्य जनिका या भावना तन्निष्ठा च या जनकता तस्या अवच्छेदकस्य अन्यूनानतिरिक्तवृत्तिरूपधर्मस्यार्थस्य या शब्दनिष्ठा प्रतिपादकता सत्संसर्गेण चमत्कारत्ववत्त्वं चमत्कारत्वविशिष्टं शब्दत्वं काव्यत्वम् ।

**तृतीयपरिष्कारसमीक्षा—**

अत्र द्वितीयपरिष्कारतो न कश्चिन्नूतनोऽर्थः । लक्षणनिरूपणस्य केवलः प्रकारभेदः । द्वितीय लक्षणं प्रकारविधया तृतीयं च संसर्गविधयेति विशेषः । प्रथमं विशेषणं ततस्तद्विशेष्यं ततस्तद्विशेष्यमित्यादिरीत्या लक्षणनिर्माणं प्रकार-विधया । यथा द्वितीये लक्षणे पूर्वं विशेषणं यत्प्रतिपादितेति प्रोक्तं ततस्तद्विशेष्योऽर्थस्तत-स्तद्विशेष्यो विषयः । तृतीये 'स्वविशिष्ट' इत्यारभ्य प्रतिपादकतामिति यावत्तु पदा-र्थ-संसर्गं विधाय चमत्कारत्ववत्वमिति लक्षणकरणं संसर्गविधया । संसर्गस्य पारम्परिकत्वाभावे संसर्गविधयैव पदार्थ-सन्निवेशो लघुभूतः । प्रकारविधया च गौरवम् । इत्थम्मतं संसर्गता-प्रकारतावादिनाम् ।

स्वविशिष्ट-जनकतावच्छेदकार्थप्रतिपादकत्वरूपपारम्परिकस्य संसर्गत्वं न प्रमाणसिद्धम् । अतः संसर्ग-विधया निर्मितमिदं तृतीयं लक्षणं न युक्तम् । "द्विती-

१. द्रष्टव्यम्, र० च० व्याख्या, १२, १३, पृ०

यमेवोचितम् । अत्र पारम्परिकः सम्बन्धः स्फुट एव । तथाहि चमत्कारत्वस्य स्वाश्रयचमत्कारवृत्ति-जन्यतानिरूपित-भावनानिष्ठजनकतावच्छेदकार्थ-प्रतिपादकता-द्वारा काव्यवृत्तित्वं विवक्षितम् । प्रमाणे सत्येव पारम्परिकः संसर्गः । "काव्यं चमत्कारवत् चमत्कारजनकं वा" इत्येव व्यवहारो विश्वजनीनः।" अतः "चमत्कारत्ववत्त्वं काव्यत्वम्" इति न रुचिरम् । "काव्यं चमत्कार-जनकम्" इति व्यवहारेण काव्ये चमत्कार-जनकता सिद्धा । अतः काव्यप्रतिपादितार्थद्वारा स्वा-(चमत्कारजनता) वच्छेदकार्थ-प्रतिपादकत्व-सम्बन्धेन चमत्कारजनकतावत्त्वं काव्यत्वमिति लक्षणं रुचिरम् । एतादृश-परम्परायाः संसर्गत्वे प्रमाणात् । इति रसचन्द्रिकाकाराशयः ।

**रसचन्द्रिकाकारमते पण्डितराजकाव्यलक्षण व्याख्याः—**

काव्यलक्षणस्थार्थपदेन शब्दस्यापि ग्रहणम् । शब्दोऽपि शब्दानां शक्यः । शब्दे द्विधा शक्तिः-ग्राह्यत्वं ग्राहकत्वं च । यथा तेजसः । अतएव शाब्दबोधे शब्दानामपि प्रकारतया भानं भर्तृहरिणा प्रोक्तम् ।[1] शब्दानां शब्देषु वृत्तिं विना शब्दबोधे भानं न सम्भवति । तद्धर्मावच्छिन्न-शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धधर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानस्य हेतुत्वात् । शाब्दबोधे शब्दस्य भानादेव "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इत्यत्र रक्तादिपदोपादाने भग्न-प्रक्रमत्वदोषः प्रकाशे प्रोक्तः । कारणमालालंकार-निरूपण-प्रसंगे पण्डितराजेनाऽपि शाब्दबोधे समेषां शब्दानां भानं स्वीकृतम् ।[2] न च शाब्दबोधे भासमानस्य शब्दस्यार्थपदशक्यत्वेऽपि चमत्कारजनक-भावनाविषयत्वाभावान्न रमणीयत्वमिति वाच्यम् "सकलकलमेतज्जातं तुहिनांशुविम्बमिव" इत्यादौ शब्दरूपसाधारण-धर्मायामुपमायां शब्दस्यापि चमत्कारजनकभावना-

---

१. ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानामेते पृथगवस्थिते ॥
विषयत्वमनापन्नैः शब्दैर्नार्थः प्रतीयते ।
न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः ॥
न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुबिद्धमिव ज्ञानं सर्वं शब्देन भासते ॥
वा० -प० ब्र० का, ५५, ५६, तथा १२४ कारिकाः ।

२. शाब्दबोधेऽपि पदभानम्, र० गं० व०, पृ० सं० ५५५ ।

विषयत्वस्यानुभवसिद्धत्वात्। उपमाया अर्थत्वे तद्घटकशब्दस्याप्यर्थत्त्वम्। अतएव वर्ण-पद-प्रकृति-प्रत्ययादीनां चमत्कार-जनकत्वं सर्वालंकारिकप्रोक्तं संगच्छते।

एवं शब्दार्थयो रमणीययोः प्रतिपादकः शब्दः काव्यमिति फलितार्थः। क्वचिच्शब्दविषयिणी भावनाऽर्थविषयिणीं भावनां चमत्कार-जननेऽतिशेते, क्वचिच्चार्थविषयिणी सा शब्दविषयिणीं तामिति त्वन्यत्। यत्र शब्दभावनाऽर्थविषयभावनापेक्षयाऽधिक-चमत्कारिणी तत्र शब्दचित्रस्य, यत्र चार्थभावना शब्दभावनाऽपेक्षया तथा तत्रार्थचित्रस्य व्यवहारः। शब्दमात्रस्य काव्यत्वे स्वीकृत एव काव्यस्य "शब्दार्थौ शरीरम् इत्यत्र काव्यशब्दात् षष्ठी उपपद्यते। शब्दरूपस्य काव्यस्य शब्दार्थरूपं शरीरमिति तदर्थः। शरीरांशेऽर्थस्याधिकस्य भानेन शब्दरूपस्य काव्यस्य ततो भेदात् षष्ठ्या उपपत्तिः। शब्दार्थ-युगलस्य काव्यत्वे स्वीकृते "काव्यस्य शरीरं शब्दार्थौ" इत्यस्य "शब्दार्थरूपस्य काव्यस्य शब्दार्थरूपं शरीरम्" इत्यर्थः स्यात्। ततो काव्य-शरीरयोरेकत्वेन काव्यशब्दात् षष्ठी नोपपद्येत। न च "राहोः शिरः" इतिवद्भेद-कल्पनया षष्ठी नासंगतेति वाच्यम्, भेदकल्पने क्लिष्टकल्पनापातात्। अतः शरीर-भूतयोः शब्दार्थयोः प्रतिपादकः शब्दः काव्यमित्येव स्वीकरणीयम्। एतेन शब्दमात्रस्य काव्यत्वेऽर्थगतानां ध्वनिगुण-दोषालंकाराणां निरूपणं व्यर्थमिति समाक्षेपः समाक्षिप्तः। "प्रतिपादकत्व-सम्बन्धेन रमणीयार्थवान् शब्दः काव्यम्" इतिव्याख्या-पक्षेऽर्थविशिष्टः शब्दः काव्यशरीरमित्यायाति। एवमपि "शब्दार्थशरीरं काव्यमित्याचार्यवचनस्य नासंगतिः। शब्दार्थयोः शरीरे प्रवेशेऽपि शब्दस्य प्राधान्ये विरोधाभावात्।" स्वं रूपं शब्दस्याऽशब्द-संज्ञा" इति सूत्रबलेन तत्र रूपग्रहणज्ञापितयाऽर्थवत्परिभाषया च शब्दार्थोभयोपस्थितौ व्याकरणे यथाऽर्थे कार्यासम्भवेनार्थविशिष्टः शब्दः संज्ञी प्रोक्तः, तथा अर्थविशिष्टः शब्दः काव्यमित्यङ्गीकार्यम्। विशेषणतयार्थस्यापि काव्यशरीरे प्रवेशो जात एव। "स्वं रूपम्" इत्यादिसूत्रस्य प्रत्याख्यानेऽपि भाष्यकृता "प्रकारतया उपस्थितस्य शब्दस्य परित्यागोऽनुचित" इति प्रोक्तम्। अर्थे कार्यासम्भवेन व्याकरणे शब्दो विशेष्य इति त्वन्यत्[१] एवमिहापि

---

१. भाष्ये तु अर्थे कार्यस्य बाधेऽप्युपस्थितत्वात् राज्ञ "इत्यादौ तज्जन्य-बोधे प्रकारतया भासमानस्य राजन्-शब्दस्यैव ग्रहणं भविष्यति इति व्यर्थं सूत्रम्। उपस्थितार्थ-त्यागे मानाभावेन तस्य विशेषणतयाऽन्वयसम्भवेन चार्थवत् परिभाषा सिद्धा।"—द्रष्टव्यम्, ल० श० शे०, पृ० सं० ६६।

स्वीकार्यम् । एवमर्थवच्छदस्य काव्यशरीरत्त्वेपि विशेषणस्यार्थस्यालंकृतत्वे दूषितत्वे च" अलंकृतं दूषितं च काव्यम् इति व्यवहार उपपद्यते । अतोऽर्थवच्छब्दस्य काव्यत्वेऽर्थगतानां-गुणालंकारदोषादीनां निरूपणं संगतमे वा नहि शब्दमात्रं काव्यशरीरं पण्डितराजेनाभिहितम्, येन तन्मते तेषां निरूपणमसंगतं स्यात् । अतः प्रागुक्तं महामहोपाध्यायश्रीगंगाधरशास्त्रिणां दत्तमेतद् दूषणमसंगतमेव । दृश्यते हि लोके लोमलांगूलवति शक्तः पशुशब्द इति लाङ्गूलेऽलंकृते दूषिते वा "अलंकृतः पशुर्दूषितो वा पशुः" इति व्यवहारः ।

एवमृग्वेदपुराणादीनामर्थवच्छदा एव शक्या इति ध्येयम् । अर्थशब्देन शब्दस्यापि ग्रहणेन रमणीय-शब्दार्थ-प्रतिपादकः शब्दः काव्यमिति रसचन्द्रिकाकारमत आयाति ।

समेषां वेदादिशब्दानामर्थवच्छब्दाः शक्या इति सिद्धान्ते प्रमाणम्:—

रसचन्द्रिकाकारेण केदारनाथओझामहाभागेन समेषां शब्दानामर्थवच्छब्दा एव शक्याः स्वीकृताः । अत्र नानाप्रमाणान्युपन्यस्तानि खण्डितानि च वेदत्वादेः शब्दार्थोभयनिष्ठत्व-प्रतिपादकानि नागेशभट्टादीनां मतानि । तद्यथा—

"एवमेव ऋगादिपदस्य अर्थविशिष्टः शब्दविशेषः शक्यः । अत "आद्यन्तवदेकस्मिन्" सूत्रे भाष्ये एकवर्णं पदम्, एकपदा ऋक्, एकर्चं सूक्तम्" इत्यादेर्व्यवहारस्याऽमुख्यतया व्यपदेशिवद्वचनेनास्य फलत्वमाशंक्य "अत्राप्यर्थेन युक्तो व्यपदेशः पदं नामार्थः, ऋड्नामार्थः, सूक्तं नामार्थ इति" इत्युक्तं भाष्ये । अर्थेन निमित्तसद्भावेन व्यपदेशो मुख्यो व्यवहारः । अत्र प्रदीपः—पदादीनां योऽर्थः सोऽन्यपदार्थ इत्यर्थः । अभेदोपचाराच्चार्थ एव पदादिभिरभिधीयते इति व्याख्याति । तत्रत्यार्थ शब्देन अर्थविशिष्टः शब्दोऽभिप्रेयते, शब्दबोधकानां पदानामर्थविशिष्टे शब्दे शक्तिस्वीकारात्, वृत्तिविषयकत्वरूपार्थवत्त्वस्य अर्थवति शब्दे स्वीकारात्, पूर्वोक्तरीत्या स्वरूपेऽपि शब्दानां शक्ति स्वीकारात् । तथा चार्थविशिष्टः शब्दोऽन्यपदार्थः शब्दमात्रश्चावयव इतिभावः । तथा च ऋक्सूक्तादिपदवत्काव्य-पदस्यापि अर्थवति शब्द एव शक्तिर्युक्ता । यद्यप्युद्योते—"अर्थेन युक्तः" इति भाष्यस्य पदादिशब्दार्थस्यार्थेन युक्तत्वादित्यर्थ इति व्याख्यातं परं न तत्प्रतिकूलम् । मुख्यव्यवहारप्रदर्शने साक्षान्निमत्त-प्रदर्शन-परतया भाष्यस्य योजनं

सम्यगित्यभिप्रायेण मया तथा व्याख्यायते ।...शब्दार्थोभयस्य विशेष्यतया क्वचिदपि व्यवहार उपयोगाभावादर्थविशिष्टशब्दस्य च सर्वत्र व्यवहारसाधकत्वात् ।"[१]

"अंत एव वेदत्वादेरूभय-वृत्तित्व-प्रतिपादकः" तदधीते तद्वेद 'इत्यादिसूत्रस्थो भगवान् पतञ्जलिः संगच्छते' इति तावत्परीक्ष्यते । इदं हि तत्र महाभाष्यम्...इति । अत्र कैयटः...स्वाध्यायं पठतीत्यर्थः । अनेन भाष्येण वेदत्वं शब्दार्थोभयवृत्ति, अर्थवच्छब्दवृत्ति वेति सूच्यते । इति चिन्तनीयम् । कैयटग्रन्थेन पूर्वोत्तरपक्षयोरुभयोरपि वेदस्वरूपे नार्थस्य प्रवेश इति स्फुटमायाति । अर्थज्ञानं विना वेदस्वरूपवेदनस्य तेनांगीकारात्, तच्च वेदस्य शब्दार्थोभयरूपत्वं स्फुटं विरुणद्धि, अर्थवेदनं विना वेदार्थस्वरूपस्यावेदनात् । भाष्यविरोधोऽपि दृश्यताम् । अर्थनिरपेक्षं शब्दमात्रपठनं वेदपठनम्, शब्दनिरपेक्षमर्थ वेदनं वेदवेदनमिति मनुते भगवान्, वेदस्योभयरूपत्वे न वेद पाठो न च वेदवेदनमिति मर्मप्रकाशस्य कीदृशी भाष्यभक्तिः । वेदपाठादिशब्दो लक्षणयोपपद्यत इति चेद्, व्यवहारे कुत्र वेद शब्दस्तव मते मुख्यार्थ इत्यन्विष्यताम् । न कुत्रापि चेद् धन्येयं लक्षणासक्तिः । तस्मान्न कुत्रापि केनचिद् वेदत्वं शब्दार्थोभय-व्यासक्तमभिप्रेतं मर्मप्रकाशतत्सहचरैर्विना । किन्तु न शब्दमात्रं शब्दविशेषः, नापि तावानेव, किन्तु अर्थविशेषविशिष्टः शब्दो वेद इति सवैषामभिपतम् । शब्दमात्रस्य न वेदत्वमपितु अर्थविशिष्टस्येतिविषये प्रमाणान्यन्यान्यपि भाष्याणि । "तेन प्रोक्तमि" ति सूत्रस्थं भाष्यमपि वेदत्वस्य शब्दार्थोभयवृत्तित्वे प्रमाणमिति मन्वते नागोजिभट्ट महोदयाः । परं विवेचने अर्थविशेषस्य वेदस्वरूपे प्रवेश इत्येवायाति न तु समानभावेन शब्दार्थयोरिति । स चार्थविशिष्टशब्दस्य वेदत्वेऽपि संगच्छते । 'षडंगो वेदोऽध्येयो ज्ञेयश्च' इत्यादि श्रुतिरपिअर्थविशिष्ट शब्दस्य वेदत्व एव संगच्छते । अध्ययनेन विशेष्यस्य शब्दस्यग्रहणेऽपि अर्थज्ञानाय ज्ञेयपदोपादानात् । उभयस्वरूपत्वे तु अन्यतरेण वेदाध्ययनेन वेदज्ञानेन वा गतार्थत्वे उभयोरुपादानस्य व्यर्थत्वाद् । शब्दांशस्यैवाध्ययनमिति रीत्या व्याख्याने तु न वेदस्याध्ययनं नापि ज्ञानमित्यापद्यत इति नेह प्रतन्यते ।

अनादिनिधना नित्या वागुसृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥

इति वाग्रूपतां वदन् हरिरपि शब्दरूपतां वदति ।"[२]

---

१. रसचन्द्रिका, पृ० सं० १० ।
२. सैव, पृ० सं० २३-२४ ।

**उभयलक्षणसमीक्षाः—**

पण्डितराजमते रमणीय-शब्दार्थप्रतिपादकः शब्दः काव्यमित्यवगतम्। अतः प्रतिपादकत्वसम्बन्धेन शब्दार्थविशिष्टः शब्दः काव्य शरीरम्। मम्मटमते शब्दार्थौ काव्यशरीरम्। शब्दार्थयोः काव्यत्वं व्यासज्यवृत्ति। एकत्र शब्द एव विशेष्योऽपरत्रोभाविति त्वन्यत्। वस्तुतः शब्दार्थ-युगलस्य व्यवहारे क्वचिद् विशेष्यत्वस्याऽदर्शनेऽपि अन्यतरस्य विशेष्यत्वं विशेषणत्वं च दृष्टम्। यथा "घटमुच्चारय" इत्यत्र घटशब्दो विशेष्यः। कम्बुग्रीवादिमदर्थस्योच्चारणकर्मत्वाभावेन वाचकत्व-सम्बन्धेन तादृशार्थविशिष्टघटशब्दमुच्चारयेति तदर्थात्। घटमानय" इत्यादौ कम्बुग्रीवादिमदर्थ एव विशेष्यः। शब्दस्यानयनासम्भवेन वाच्यत्वसम्बन्धेन घटशब्द विशिष्टं तादृशमर्थमानयेति तदर्थात्। एतादृशस्थले शब्दस्य प्रकारतया भानम्। एवमास्वादोद्बोधकत्वस्योभयत्र सत्त्वेन, एकस्य विशेष्यत्वे विशेषणत्वे वा मानाभावेन च मम्मटलक्षण उभयोरुपादानम्।

मम्मटलक्षणेऽदोषाविति विशेषणस्योद्देश्यप्रतीतिप्रतिबन्धकच्युत- संस्कृतित्वादि-दोष विशेषाभाववन्ताविति टीकाकृदभिहितोऽर्थोऽरमणीयः। क्लिष्टकल्पनाग्रस्तत्वात्। तथाहि अदोषावित्यत्रस्थस्य नञोऽल्पार्थकत्वमाश्रित्य तथार्थकरणं प्रौढिवादमात्रमिति सहृदयैराकलनीयम्। अहो मम्टकाव्यलक्षणसदृशं क्वापि लक्षणमस्फुटतादोषग्रस्तं नोपलभ्यते। अस्याऽस्फुटत्वमेव नानाटीकाकृतां क्लिष्टकल्पनाया बीजम्। सदोषयोः शब्दार्थयोः काव्यत्वं स्वीक्रियते, लक्षणे च विपरीतं निवेश्यते। अत आह साहित्यदर्पणरुचिराटीकाकारः—

"अदोषावित्यनेन निर्दोषयोर्यदि काव्यत्वं प्रतिपाद्यते, तर्हि ईषद्दोषयोः केन। न तद्विधायकं किञ्चित्।" सति सम्भवे इति निवेश्यते तर्हि सर्वत्र निर्दोषौ क्वचित् पुनरीषद्दोषौ शब्दार्थौ काव्यमिति वक्तव्ये तथाभिधानं किम्मूलम्। अन्यथा "अनलंकृती क्वापी"त्यपि किमर्थमुक्तम्। कि चैतादृशं लक्षणं न शोभते !...अदोषावित्यनेन काव्यत्वोपमर्दकदोषैरेव शून्ययोर्यदि वा काव्यत्वमङ्गी क्रियते। तर्हि किं नाम काव्यम् ? किं तत्र तत्त्वम् ? किं वा तदनभिधाय तदुपमर्दक-दोषशून्ययोः काव्यत्वमित्युच्यते ? कथं वा नात्रान्योन्याश्रयापातः ? यदि काव्यत्वोपमर्दकदोष-शून्यत्वमेव काव्यत्वमित्युच्यते, तर्हि के काव्यत्वोपमर्दकाः ? के पुनर्नेति वक्तव्यम्। ननु अपरिहार्या नित्या दोषाः काव्यत्वोपमर्दका इति चेत्! 'अहौ वा हारे' इत्यादौ

भवद्दर्शितनयेन रसानोचित्यस्य केन परिहार्यत्वम् केन वा काव्यत्वमवस्थाप्यते ? तदिति सर्वं मत्त-प्रलपितम् ।'[१]

"काव्यप्रकाशस्य लक्षणमनुपहसनीयकाव्यस्ये"ति नागेशाशयोऽप्यसमीचीनः । तत्र प्रश्न उदेति यत् किं काव्यमुपहसनीयमनुपहसनीयं वा ? यदि चमत्कार-रहितमुपहसनीयं तत्सहितमनुपहसनीयमित्युच्यते तर्हि चमत्कार-वन्तौ-शब्दार्थौ काव्यमिति लक्षण-करणं श्रेयः । अलंकाराणामस्फुटत्वमपि नोपपद्यते । अस्फुटत्वे चमत्कार-जनकत्वं तत्रास्ति न वेति प्रश्नः ।अस्ति चेन्नाऽस्फुटत्वम् । नास्ति चेद् अलंकारत्वमपि नास्ति । चमत्कृत्यनाधानं विना अस्फुटत्वं किमन्यद-स्फुटत्वम् ।

वस्तुतः काव्यप्रकाशस्य "तददोषावि" त्यादि न काव्यलक्षणम् । किन्तु मम्मटकृतकाव्यनिरूपणप्रतिज्ञावाक्यम् । अनेन प्रकाशकृद् गुणांलंकारादिभिरुपलक्षितं काव्यनिरूपणं प्रतिजानीते । अतो "लोकोत्तरवर्णना-निपुणकविकर्म काव्यम्" इत्येव काव्य लक्षणं ज्ञेयम् । अथवा लक्षणस्य स्फुटत्वेन प्रकाशकृता न लक्षित मिति ज्ञेयम् । पण्डितराजेनापि गुणालंकारादि भिरूपलक्षितस्य काव्यस्य निरूपणं प्रतिज्ञातम् ।[२] पण्डितराजस्यैव लक्षणं सर्वथा निर्दुष्टमिति मन्मतिः । विचारयन्तु स्वयमेव विपश्चितः । स्फुटत्वमपि लक्षणस्य गुणावहम् ।

**काव्य-कारण-विषये तुलनाः-मम्मटमतम्ः—**

प्रतिभा-व्युत्पत्यभ्यासानां काव्यं प्रति दण्डचक्रादिन्यायेन कारणता, न तु तृणारणिमणिन्यायेनेति मम्मटः । अतएव "इति हेतुस्तदुद्भवे" इत्यत्रत्यहेतु-शब्दे एकवचनप्रयोगः । यथा "जात्याकृतिव्यक्तयः पदार्थः" इतिगौतमसूत्रे पदार्थशब्द एकवचनप्रयोगेण त्रयाणां जात्यादीनां पदार्थत्वम्, तथेहापि त्रयाणां प्रतिभादीनां काव्यकारणत्वम् । "शक्तिनिपुणता" इत्यादिकारिकायां शक्तिशब्देन निपुणता-शब्देन च प्रतिभा-व्युत्पत्ती एवाभिहिते ।

---

१. सा० द० रू० टी०, पृ० सं० १५ ।

२. द्रष्टव्य, रसचन्द्रिका टीका, पृ० १७ ।

**प्रतिभा (शक्ति) :—**

शक्त्यपरपर्याया प्रतिभा कवित्व-बीजरूपः संस्कारविशेष इति मम्मटः। शक्तिः कवित्व-बीजभूतो देवताप्रसादा दिजन्मा संस्कारविशेषः प्रतिभापदव्यपदेश्य इति गोविन्दठक्कुरः। काव्यघटनानुकूल शब्दार्थोपस्थितिः प्रतिभा इति पण्डितराजः प्रभाकृद् वैद्यनाथश्च। नव्यन्याये स्मृतिवचनोऽत्रोपस्थितिशब्दो ज्ञानमात्रपरः मानस-प्रत्यक्षवचनो वा। स्मृतिमात्र-परत्वे काव्यघटनानुकूलशब्दार्थ-स्मृतिरित्यर्थः स्यात्। स्मृतिश्च संस्कारमात्रजन्यं ज्ञानं। संस्कारश्चानुभवजन्यः। यथाऽनुभवस्तथैव संस्कारः तथैव च स्मृतिः। नहि तुरगानुभवजन्य-संस्कारेण गर्दभस्य स्मृतिः। अतः स्मृतानां पदार्थानां न नूतनत्वम्। अतोऽनूतनानां न काव्य-घटनानुकूलत्वम्। नूतनानामेव तथात्वात्। अतोऽत्रोपस्थितिशब्दो ज्ञानवचनो मानस-प्रत्यक्षपरो वा बोध्यः। "यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवे" रिति ध्वन्यालोककारिकाव्याख्यावसरे स्मृतमात्राणां पदार्थानां काव्य घटनाननुकूलत्वमुक्तम्।"[1] काव्यघटनानुकूल शब्दार्थ प्रत्यभिज्ञा प्रतिभेति यावत्। दैवताराधनादि-जन्यं विलक्षणा दृष्टं प्रतिभापदव्यपदेश्यं तत्तद्रसादिवासना वेति काव्यप्रकाशस्य संस्कारविशेष इति पदं व्याचक्षाणो झलकीकरवामनः। "प्रज्ञा नवनवोन्मेषशालिनी प्रतिभोच्यते"इति रुद्रकोशः। क्वचित् प्रतिभापदस्थाने बुद्धिरिति पाठः। बुद्धिश्च साङ्ख्यनये निश्चयापरपर्यायाऽध्यवसायरूपधर्मवती अन्तःकरणतत्त्वविशेषः।[2] तस्याश्च शीघ्रतया नवनवविषयाकारेण परिणामो नवनवोन्मेषः। एषैव बुद्धि र्नीत्यादिसर्वविद्यानुकूला। इयं च न काव्य-घटनानुकूलैव। एनामेवादाय बुद्धि-बलमिति व्यवह्रियते। एषा प्रतिभाशक्त्यादिपदै र्व्यवह्रियते। सांख्याभिमता बुद्धिर्यद्यपि समेषां समानैव। तथापि सा न प्रतिभा। तस्याः प्रतिपुरुषमनादिकाला-न्मुक्तिपर्यन्तं विद्यमानत्वेऽपि सा प्रतिजन्म प्रतिभापदेन न व्यपदिश्यते। सांख्ये पुण्याद्यदृष्टमनुभववशा भावना च बुद्धिधर्मः। तद्युक्तैव सा प्रतिभापदवाच्या कदा-चित्। बुद्धेर्नवनवोन्मेषोऽदृष्टवासना-हेतुकः, न तु स्वाभाविकः। अत एवालंकारिका

---

१. ध्व० लो० लोचनम्, "तेन ज्ञातस्यापि विशेषतो निरूपणमनुसंधानात्मकमत्र प्रत्यभिज्ञानम्, न तु तदेवेदमित्येतावन्मात्रम्।"—पृ० सं० ९७।

२. अध्यवसायो बुद्धिः "क्रियाक्रियावतोरभेद विवक्षया। सर्वो व्यवहर्ताऽऽलोच्य मत्वा" अहमत्राधिकृतः "इत्यभिमत्य कर्तव्यमेतन्मया" इत्यध्यवस्यति, ततश्च प्रवर्तत इति लोकसिद्धम्। —सां० का० २३, तमस्य सांख्यतत्वकौमुदी।

अदृष्टे वासनायाञ्च प्रतिभापदं प्रयुञ्जते । तत्र तत्पदं लाक्षणिकं ज्ञेयम् । एतादृशमदृष्टं विलक्षण-सामर्थ्यशालि सत् प्राक्तन-कवित्वानुभवनिरपेक्षं नव-नवोन्मेषं विदधाति । "देवतारा-धनादिजन्यं विलक्षणादृष्टं शक्नोति काव्यनिर्माणायानयेति योगाच्छक्ति:" इति नागेश: ।[१]

'संस्कारविशेष' इति काव्यप्रकाशप्रयुक्ते पदे संस्कार- शब्देनादृष्टस्यैव ग्रहणम् । तद्विशेषश्च प्रतिभा 'वैशिष्ट्यं च देवताराधनादिजन्यत्वेन । अतएव' विलक्षणादृष्टम् इति वामनेन व्याख्यातम् । अदृष्टेऽपि संस्कारशब्द-प्रयोग उपपद्यते, अनुभवजन्य-संस्कारवत्तस्यापि बुद्धिसंस्कारकत्वात् । प्रदीपस्थं संस्कारपदमपि अदृष्टपरं ज्ञेयम् । तेन विलक्षणादृष्टा बुद्धि: प्रतिभेति निष्कर्ष: ।

एतादृशादृष्ट-जन्य-नवनवोन्मेषशालिबुद्धि: प्रतिभेति परिभाषा न्यायसिद्धान्तविरुद्धा । ज्ञानं बुद्धिरिति नैयायिका: । तस्याश्च क्षणत्रयावस्थायिनीत्वेन नवनवविषयावगाहनं नोपपद्यते । नहि घटविषया तादृशी बुद्धिर्घटं विहाय पटं विषयी करोति । "शब्दबुद्धि-कर्मणां विरम्य व्यापाराभाव" इति सिद्धान्तेन तस्या नवनवोन्मेषरूपव्यापारोऽसम्भव: । अतो धारावाहिकतया समुत्पद्यमाना नवनवोन्मेषा बुद्धि: प्रतिभा न भवितुमर्हति । अत: पण्डितराजेन शीघ्रतया नवनवविषयाकार परिणामरूपनवनवोन्मेषा सांख्याभिमता बुद्धिरेव प्रतिभा-पदार्थतया स्वीकृता इति प्रतिभातीति रसचन्द्रकाकारमतम् ।[२]

### निपुणता:—

निपुणता व्युत्पत्तिरित्यनर्थान्तरम् । सा च जड़चेतनात्मकलोकच्छन्दोव्याकरणादिशास्त्र-रघुवंशादिमहाकविकाव्येतिहासपुराणावलोकनेन जन्या । जन्मान्तरीयामपि निपुणतामंगीकुर्वतामालंकारिकाणां मते संस्कारापरपर्याया व्युत्पत्तिशब्दव्यपदेश्या वासना निपुणता । लोकशास्त्रादीनां श्रवणमेवानुभवजनकं निपुणतेति केचित् । तन्मते संस्कार द्वारा तस्या: काव्यं प्रति कारणता ।

### अभ्यास:—

"काव्यज्ञशिक्षयाभ्यास:" इत्यत्र विद्यमान: काव्यज्ञशब्द: कविसमालोचकपर: । अत एव "काव्यं कर्तुं विचारयितुं च ये जानन्ति" इतिवृत्तिग्रन्थसंगति: । ततश्च

---

१. द्रष्टव्य: प्रदीपो द्योत: काव्यकारणनिरूपण-प्रकरणे ।

२ द्रष्टव्या रसचन्द्रिका, २६ तमे पृष्ठे ।

कविसमालोचक-जनशिक्षया काव्यस्य, निष्पादने पदावापोद्वापरूपयोजने च भूयो-भूयः प्रवृत्तिरभ्यासः। एवं करणयोजनप्रवृत्तिजन्यः संस्कार एव स्थैर्यं लभमानः काव्यकारणयोग्यतां लभते। अभ्यासो व्युत्पत्तिवत् संस्काररूप एव। व्युत्पत्तिरूपः संस्कारो लोकशास्त्राद्यनुभवजन्यः अभ्यासश्च करण-योजनाप्रवृत्तिविषयकानुभव-जन्यः। द्वयोः, संस्काररूपत्वेऽपि कारणभेदाद्भेदः।

एतेषां त्रायाणां दण्डचक्रादि न्यायेन काव्यकारणतेति मम्मटाऽऽचार्यमतम्।

**पण्डितराजमतम्:—**

काव्यस्य कारणं प्रतिभामात्रम्। प्रतिभानिष्ठकारणतावच्छेदकं प्रतिभात्वं च जातिविशेष उपाधि-रूपं वाखण्डम्। उपाधिश्च जातिसमशीलो धर्म-विशेषः। सामान्यतः सर्वत्र कार्यकारणभाव-ग्रहे कार्यतावच्छेदकस्य कारणतावच्छेदकस्य च धर्मस्य जातित्वमुपाधित्वं वाऽवश्यमंगीक्रियते। कश्चिदपि बुद्धिमान् दण्डेन घटं निर्मान्तं कुलालं विलोक्य सकलेषु दण्डेषु घटनिष्ठ-कार्यतानिरूपित-कारणतामव-गच्छति। अतएव नष्टेऽपि तस्मिन् दण्डे घटनिर्माणार्थं दण्डान्तरमादत्ते। यद्वशात् सकलदण्डेषु कारणतां निर्णयति स धर्मो दण्डत्वं जातिरखण्डोपाधिर्वा। स एव दण्डनिष्ठकारणतावच्छेदकः। एवं दण्डनिष्ठकारणतानिरूपिता कार्यता सर्वेषु घटेषु निश्चीयते। अतएव घटान्तरोत्पादनाय स दण्ड आदीयते। यद्वशेन सकलघटव्य-क्तिषु तादृशकार्यताऽवधार्यते स घटत्वधर्मोऽपि तादृगेव। एवं काव्यनिष्ठकार्य-तानिरूपितायाः प्रतिभानिष्ठ-कारणताया अवच्छेदकं प्रतिभात्वम्।

सा च प्रतिभा काव्यार्थ-घटनानुकूलशब्दार्थोपस्थितिरूपा। तस्याः कारणं क्वचिद् देवतामहापुरुषादिप्रसादजन्यमदृष्टं विलक्षणव्युत्पत्तिकाव्यकरणाभ्यासौ च। न च त्रयाणां देवतादि-प्रसाद-जन्यादृष्टव्युत्पत्यभ्यासानां प्रतिभां प्रति कारणता। व्युत्पत्यभ्यासरहितस्यापि बालस्य देवतादि-प्रसाद-जन्यादृष्टेन प्रतिभाया उत्पत्तेर्दर्शनात्। चैतन्यमहाप्रभुणा पंचहायनस्य मूकस्य बालस्य कर्णपूरस्य मुखेऽङ्गुल्यग्रं प्रवेश्य विलक्षण प्रतिभा समुत्पादितेति जनश्रुतिरप्यनुकूलैव। न च तत्र जन्मान्तरीयौ व्युत्पत्त्यभ्यासौ कल्पनीयौ, गौरवान्मानाभावात् कार्यस्यान्यथा-प्युपपत्तेश्च। लोके बलवता प्रमाणेनागमादिना यत्र कार्यकारणभावो निर्णीतस्तत्र पश्चादागतस्य व्यभिचारस्य निवारणाय जन्मान्तरीय-धर्माधर्मादीनां कल्पनम्। यथा मंगलसमाप्त्योः कार्यकारणभावे प्रमाणान्तरेण निर्णीते बाणभट्टकृतायां काद-

म्बर्या मंगलसत्त्वेऽपि समाप्त्यभावमन्यत्र किरणावल्यादौ च मंगलाभावेऽपि समाप्तिमवलोक्य उपस्थितस्य कार्यकारणभावव्यभिचारस्य वारणाय जन्मान्तरीयस्याऽधर्मस्य धर्मस्य वा प्रतिबन्धकस्य साधकस्य वा परिकल्पनम्। अन्यथा निर्णीतकार्यकारणभावे भ्रमत्व प्रतिपत्तिः स्यात्।

एवमदृष्टमेव न प्रतिभा-कारणम्। किंचित्कालं यावत् काव्यनिर्माणशक्तिहीनस्य अपि प्रयतमानस्य व्युत्पत्यम्यासयोरुत्पन्नयोः प्रतिभोत्पतिदर्शनात्। न चात्राऽदृष्टस्यैव हेतुत्वमिति वाच्यम्, तस्यैव हेतुत्वे व्युत्पत्त्यभ्यासाभ्यां प्रागपि प्रतिभोत्पत्ति-प्रसंगात्। न च तत्राऽपि प्रतिभाजनकादृष्टव्यतिरिक्तं प्रतिबन्धकमदृष्टान्तरं कल्प्यमिति वाच्यम्। तथाविधानेकस्थलेऽदृष्टस्य कल्पनापेक्षया क्लृप्तव्युत्पत्त्यभ्यासयोरेव तस्या हेतुत्वकल्पने लाघवात्।

एवमदृष्टजन्या प्रतिभा व्युत्पत्त्यभ्यासजन्यप्रतिभातो विलक्षणा। एवं विलक्षणा प्रतिभा विलक्षणं काव्यं प्रति हेतुः। अतो न व्यभिचारः। ननु क्वचिद् व्युत्पत्यभ्याससत्त्वेऽपि प्रतिभोत्पत्तेरदर्शनिन कारणसत्त्वेऽपि कार्याभावरूपोऽन्वयव्यभिचार इति चेत्, न। तदुत्पत्तिं प्रति विलक्षणयोरेव व्युत्पत्यभ्यासयोः कारणत्वस्य सत्त्वेन तयो वैंलक्षण्याभावस्य कल्पनीयत्वात्। अथवा पापविशेषस्य प्रतिबन्धकत्वं कल्पनीयम्। समुदितकारणतावादिनां शक्तिमात्रकारणतावादिनां च मते प्रतिबन्धकाभावस्य कारणताऽविशिष्टा। प्रतिवादिना मन्त्रौषधादिभि र्विहितनानाकाव्यग्रन्थस्य अपि कवेः कियन्तं कालं यावद् वाक्स्तम्भे कृते काव्यानुदयस्य दर्शनात्। एवं पण्डितराजाशयः।

**समीक्षाः—**

शक्तिनिपुणताभ्यासाः समुदिताः काव्यकारणमिति मम्मटः। शक्तिरेव काव्यकारणम्, निपुणताभ्यासौ देवतादिप्रसादजन्यमदृष्टं च तृणारणिमणिन्यायेन तस्या हेतू इति पण्डितराजाः। अनेके ह्यालंकारिकाः समुदितकारणता वादिनः। यथा—

प्रतिभाच्छन्दोऽभिधानादिशास्त्रविलोकनजन्या निपुणता काव्यज्ञशिक्षाहेतुकाभ्यासाश्चेति समुदिताः काव्यहेतुः। त्रितयसत्त्व एव निर्दुष्टकाव्य-निर्माणम्। कुकवित्वापेक्षयाऽकवित्वं वरम्। अकवित्वं व्याधये धर्माय दण्डनाय वा भवति। किन्तु कुकवित्वं साक्षाद् मरणम्। एकमपि दूषितं पदं काव्ये न प्रयोज्यम्। तेन पदेन

कविर्दुःसुतेनेव निन्द्यते। एवम्विधमनुपहसनीयं काव्यं शक्त्यादित्रय-सत्त्व एवोपपद्यते।[१]

स्वाभाविकी प्रतिभा निर्मलं श्रुतममन्दोऽभियोगश्चेति समुदितं काव्य-हेतुरिति दण्डी।[२]

प्रतिभाव्युत्पत्यभ्यासाः काव्यहेतुः, तयोः क्रमशः काव्यस्य जनक-भूषक-भृशोत्पत्तिकारकत्वादिति वाभटः।[३]

मृदम्बुसम्बद्धं बीजं यथा लतां प्रति तथा व्युत्पत्यभ्याससहिता प्रतिभा काव्यं प्रति हेतुरिति पीयूषवर्षः।[४]

अन्येऽपि विद्वांसः समुदितानामेव कारणत्वं वदन्ति।

यथा—

विशिष्टकाव्यं प्रति प्रतिभादित्रितयस्यैव कारणत्वमुपपद्यते। शक्तिर्हि द्विधा उत्पादिका व्युत्पादिका च। आद्यया पदसंघातस्य योजनेऽपि द्वितीयस्या अभावे विनेयसमवेतविलक्षण वाक्यार्थधियोऽसम्भवेन लोकोत्तरवर्णनानैपुण्यस्य कविगतस्याभावाद् विशिष्टकविकर्मतायास्तत्सत्त्व एव सम्भवात्। तत्र द्वितीयैव निपुणता नाम। अभ्यासो लोकोत्तरत्वं प्रत्येवोपयुज्यते। तथा च लोकोत्तर-वर्णना-निपुणता-

---

१. गुरूपदेशादध्येतुं शास्त्रं जडधियोप्यलम्।
काव्यं तु जायते जातु कस्यचित् प्रतिभावतः॥
शब्दश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः।
लोको युक्तिः कलाश्चेति मन्तव्याः काव्यगैरमी॥
शब्दाऽभिधेये विज्ञाय कृत्वा तद्विवदुपासनाम्।
विलोक्यान्यनिबन्धांश्च कार्यः काव्यक्रियादरः॥"
—भामहालं०, १, परि० ५, ९, १० कारिकाः

२. नैसर्गिकी च प्रतिभा श्रुतं च बहुनिर्मलम्।
अमन्दश्चाभियोगोऽस्याः कारणं काव्य-सम्पदः॥ —का० द० १, परिच्छेदः।

३. प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम्।
भृशोत्पत्ति-कृदभ्यास इत्यादिकविसंकथाः॥
—मदनमोहनझाकृतर.गं: भा० टी० भूमिका, पृ० सं० २१।

४. प्रतिभैव श्रुताभ्यास-सहिता कवितां प्रति।
हेतुर्मृदम्बुसम्बद्धबीजोत्पत्तिर्लतामिव॥ —तत्रैव।

विशिष्टकविकर्मरूपकाव्यं प्रति त्रितस्यैव कारणत्वमुचितम् इति महामहोपाध्याया गंगाधरशास्त्रिण: ।[१]

रुद्रटवामन-पण्डितराजप्रभृतय: प्रतिभामात्रकारणतावादिन: । "प्रतिभा द्विधा-सहजा उत्पाद्या च प्रथमा देवतादिप्रसादजन्यादृष्ट-जन्मा परा च व्युत्पत्त्यभ्यासजन्या" इत्याह रुद्रट: ।[२]वामनेनापि "कवित्वस्य बीजं प्रतिभानम्, यस्माद्विना काव्यं न निष्पद्यते, निष्पन्नं वा हास्यायतनं स्यात्" इति प्रोक्तम् । "न विद्यते यद्यपि पूर्वं वासना गुणा"...इत्यादि वदता दण्डिनापि व्युत्पत्यभ्यासयो: प्रतिभाकारणता प्रोक्ता । सा चोत्पाद्या मध्यम-काव्य हेतुरिति त्वन्यत् ।

काव्यं प्रति प्रतिभामात्रस्य प्रतिभां प्रति व्युत्पत्यभ्यासद्वयदेवतादिप्रसाद जन्याऽदृष्टयोरन्यतरस्य च पण्डितराजप्रोक्तां कारणतां समर्थयन् प्रतिभादित्रितय-कारणतावादसमर्थक-म०-म०-गंङ्गाधरशास्त्रि-मतं खण्डयंश्च हिन्दीरसगंगाधरर-चयिता साहित्याचार्य: पुरुषोत्तमचतुर्वेदी टिप्पण्यां यदाह तस्य सार: सरलायां टीकायमित्त्थमुद्धृत:—

"सर्वेषामेव मतेन अलौकिक-चमत्कारिण एव गुम्फनस्य नाम काव्यम्, न पुनश्छन्दोलयनिबन्धनमात्रस्य । अर्थाद् भवन्मते यद्विशिष्टं काव्यं तदेव हि सामा-न्यत: काव्यम् । या ह्युत्पादिकाशक्तिरभ्युपेयते सा हि काव्यस्योत्पादिका तदैव भवेद् यदा सा विशिष्ट-कविकर्मोत्पादिका सिद्धयेत् । अतएव प्रकाशकारोऽपि अनुपहसनीय काव्यनिर्माणशक्ंति प्रतिभामाह । अतएव विशिष्ट-काव्य-शक्तिरेव प्रतिभेति काव्यं प्रति तस्या एव कारणत्वम्, प्रतिभाविकासं प्रति च व्युत्पत्यभ्यास-योरिति ।"[३]

## रसचन्द्रिकाकारकृतोभयमतसमन्वय:—

मम्मटस्य पण्डितराजस्य च मते प्रतिभामात्रस्य काव्यकारणत्वम् । मम्मटमते शक्ति-निपुणताऽभ्यासा: समुदिता: प्रतिभां प्रति हेतु: । शक्ति: संस्कारविशेष: ।

---

१. र० गं० सरलाटीका, पृ० ११ ।

२. सहजोत्पाद्या च द्विधा सा भवति ।
उत्पाद्या च कथंचिद् व्युत्पत्या जन्यते परया ॥"—रुद्रटालंकार: ।

३. सहजोत्पाद्या च द्विधा सा भवति ।
उत्पाद्या च कथंचिद् व्युत्पत्त्या जन्यते परया ॥ —रुद्रटालंकार: ।

ईदृशी शक्तिः काव्यानुकूलशब्दार्थस्मृतिमजनयन्ती काव्योत्पादनेऽक्षमा। अतः समुदिताः शक्त्यादयः शब्दार्थोपस्थितिरूपप्रतिभोत्पादन-द्वारा काव्यं प्रति हेतुरिति "इति हेतुस्तदुद्भवे" इति कारिकांशस्याभिप्रायः। एवं सुधासागरकारस्यापि मतम्। "अनन्यपरतन्त्राम्" इति मंगलाचरणस्य पदं व्याचक्षाणाः प्रदीपकाराः" कवेस्तत्प्रतिभायाश्चान्यो य आत्मनः परस्तदायत्तत्वरहिताम्" इत्याहुः।[१] कविनिर्मितेः कविप्रतिभापारतंत्र्य-वचनेन प्रदीपकृताऽपि प्रतिभामात्रस्य काव्यकारणत्वमङ्गीकृतमिति प्रतीयते। पण्डितराजोऽपि शक्त्यादित्रितयस्य प्रतिभां प्रत्येव मम्मटमते कारणतां स्वीकरोति। तस्य तां प्रति कारणतां विघटयतीति त्वन्यत्। अतएव "न तु त्रयमेव" इति व्याहृतवान्। प्रतिभां प्रति समुदितशक्त्यादित्रितयस्य कारणता तेन खण्डिता। अतएव "न तु त्रयमेव" इति प्रतीकमादाय नागेशभट्टाः—

"प्रतिभात्वावच्छिन्नं प्रति मिलितं त्रितयमेव कारणमिति नेत्यर्थः। एवकारेण क्वचित्रितयस्यापि कारणत्वमिति ध्वनयति। विलक्षणत्रितय-जन्य-प्रतिभा चाति विलक्षणा। तज्जन्यं काव्यं चाति विलक्षणमेवेति न दोष इति दिक्।[२] शक्त्यादित्रयहेतुतावादिनः शक्तिमात्रहेतुतावादिनश्च" इति मूलं यद्यपि एतादृशेभिप्राये विरोधि। तथापि तत्र संस्कारमात्रस्य हेतुतावादिनो वामनस्य शक्तिमात्रस्य हेतुतावादित्वेनोपग्रहे विरोधाभावः। यद्यपि "शक्तिः...प्रतिभाव्यपदेश्यः" इति प्रदीपोक्त्या शक्ति-प्रतिभयोरभेद एव प्रतीयते। अतः शक्त्याः प्रतिभां प्रति हेतुत्वं पूर्वोक्तमनुपपन्नम्। तथापि शक्तिः प्रतिभेत्यनर्थान्तरमिति न समेषां मतम्। भवेदपि शक्तिः प्रतिभा किन्तु सा नवनवोन्मेशालिबुद्धिरूपैव, न तु पण्डितराजपरिष्कृत-काव्यघटनानुकूलशब्दार्थोपस्थितिरूपा। अतो न विरोधः।[३]

### काव्यभेदविषये तुलनाः—

काव्यं त्रिविधम्। उत्तममध्यमाधमरूपत्वात्। वाच्यातिशयिव्यंग्यव्यञ्जकशब्दार्थ-युगलं यत्र तद्ध्वनिपदव्यपदेश्यमुत्तमं काव्यम्। यथा "निश्शेषच्युत-चन्दनं स्तनतटम्" इत्यादि पद्यम्। अत्रत्यशब्दार्थ-युगलस्य "तदन्तिकमेव रन्तुं गतासीति" वाच्यातिशायि-प्रधानव्यंग्य-व्यञ्जकत्वात्। व्यंग्यस्य प्राधान्यं च विप्रलम्भोद्दी-

---

१. काव्यप्रदीप ३ पृ०।

२. गु० म० प्र०, पृ० सं० २-१०।

३. रसगंगाधर-रसचन्द्रिका व्याख्या, ३१-३२, पृ०

पकत्वात्। व्यंग्यस्य वाच्यादनतिशायित्वे गुणीभूतव्यंग्यापराभिधानं मध्यमकाव्यम्। यथा "ग्रामतरुणं तरुण्या इत्यादौ "वञ्जुललतागृहे दत्तसंकेता नागता" इति व्यंग्यं वाच्यमुख-मालिन्यापेक्षयाऽचमत्कारि। अतस्तद्गुणीभूतम्। वाच्यमुखमालिन्यातिशयस्यैव प्राधान्ये विप्रलम्भाभास-पोषकत्वं बीजम्। गुणालंकारयुक्तमव्यंग्यं चित्रपदव्यपदेश्यं काव्यमधमम्। अव्यंग्यपदेन स्फुटप्रतीयमानार्थरहितत्त्वं कवितात्पर्यविषयत्वाभाववत्वं वा विवक्षितम्। तच्च द्विविधम्। शब्दार्थचित्रभेदाभ्याम्। यथा "स्वच्छन्दोच्छलदच्छकक्ष" इत्यादौ वृत्त्यनुप्रासालंकारस्य शाब्दस्य चमत्कार-जनकत्वेन प्राधान्यम्। प्रतीयमानाया अपि भागीरथी विषयायाः कविनिष्ठायाः कवितात्पर्यविषयत्वाभावेन न प्राधान्यम्। वृत्त्यनुप्रासमात्रयोजने कविरत्र दृढपरिकर इवावलोक्यते। यत्रार्थ-चमत्कृत्युपस्कृता शब्दचमत्कृतिः प्रधानं तत्र शब्दचित्रमितिं निष्कर्षः। एवं शब्दचमत्कृत्युपस्कृता यत्रार्थचमत्कृतिः प्रधानं तत्रार्थचित्रम्। यथा "विनिर्गतं मानदमात्ममन्दिराद्" इत्यादौ पद्ये उत्प्रेक्षालंकारस्यैव चमत्कारजनकत्वम्। सतोऽपि व्यंग्यस्य ह्यग्रीवनिष्ठस्य वीररस्य कवितात्पर्यविषयत्वाभावेन ह्यग्रीवस्य बध्यमानतया निबद्धत्वेन वा न प्राधान्यम्। इत्थं मम्मटमते काव्यस्य त्रैविध्यम्।

रसगंगाधरकाराः "काव्यं चतुर्धा उत्तमोत्तमोत्तममध्याधम भेदात्" इति प्राहुः आद्यमुत्तमोत्तमं च ध्वनिकाव्यम्, यस्य लक्षणं प्रागुक्तम्। एवमेव तैरपि "शब्दार्थौ यत्र गुणीभावितात्मानौ" इत्यादिना लक्षितम्। तच्च लक्षणं काव्यप्रकाश-प्रोक्तोत्तमकाव्य-लक्षणवदेव। शयिता सविधेऽप्यनीश्वरेत्यादि पद्ये तदुदाहरणम्।

यत्र सर्वथाऽप्रधानं व्यंग्यं चमत्कारकारणं तन्मम्टोक्तमध्यममुत्तमम्। यत्र व्यंग्यमप्रधानमेव सच्चमत्कारकारणं तद्द्वितीयम् इति तल्लक्षणम्। एवकारेणैतदुक्तं यत् सर्वथा अप्रधानं व्यङ्ग्यं चमत्कारकारणं यत्र विद्यते तत्रैवोत्तमत्वम्। यत्र च वाच्यापेक्षया प्राधान्यं व्यंग्यान्तरापेक्षया च गुणीभावस्तत्रोत्तमोत्तमत्वमेव। ध्वनावतिप्रसंगवारणाय एव पदम्। एवकारानुपादाने यत्र अप्रधानं व्यंग्यं चमत्कारकारणं तदुत्तममित्यर्थः स्यात्। तत्र उत्तमोत्तमे—

"अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवी विस्रंसनः करः॥"

इत्यत्र श्रृङ्गारस्य वाच्यापेक्षया प्रांधान्येन करुणापेक्षया च गुणीभावेनोत्तमकाव्य-लक्षणातिव्याप्तिः स्यात्। तदुपादाने तु तथा न। अत्र श्रृङ्गारस्य वाच्यापेक्षया

प्राधान्येन सर्वथा प्राधान्याभावात्। अतोऽत्रोत्तमोत्तमत्वमेव।[१] काव्यप्रकाशकारेणेदं पद्यमपराङ्गव्यङ्ग्यनामकगुणीभूतव्यंग्यप्रभेद उदाहृतम्। पण्डितराजेनात्र ध्वनिकाव्यमेव स्वीक्रियते। एतत्प्रसंगस्था सरलाऽपि अत्र ध्वनिमेव स्वीकुरुते। शोकोत्कर्षक-तया श्रृंगारापेक्षया वाच्यस्यैव प्राधान्यं वदतां नागेश-भट्टानां मते 'अयं स रसनोत्कर्षी' इत्यादौ पूर्वोक्ते पद्ये गुणीभूत-व्यंग्यत्वं मम्मट- पण्डितराज-सम्मतम्। श्रृङ्गारस्य वाच्यापेक्षया अप्यप्राधान्येन सर्वथाऽप्राधान्यमक्षतम्। अतः पण्डितराजाभिमतमुत्तमत्वमत्र सिद्धम्।[२] सरलाकारो मथुरानाथः श्रृङ्गारस्याऽत्र सर्वथाऽप्राधान्य-प्रतिपादकं नागेशभट्टवचनं प्रदीपादिग्रन्थावाश्रित्य खण्डयामास, प्रतिपादयामास च वाच्यापेक्षया श्रृंगारस्य प्राधान्यमप्रधान्यं च व्यंग्यापेक्षया सिद्ध-मेव।[३]

अत्र सरलाकारकृतं नागेशोक्तिखण्डनं विचारणीयमास्ते। श्रृङ्गारमादायात्र ध्वनित्वस्थापनमयुक्तम्। श्रृङ्गारमादाय गुणीभूत-व्यंग्यत्वं करुणमादाय च ध्वनित्वमिति काव्यप्रकाशनानाटीकाकारैरेभिहितत्वात्। निष्पन्नस्याऽखण्डस्य रसस्य-गुण-भावासम्भवेनैता दृशस्थले श्रृङ्गारादिपदस्य रत्यादि-स्थायिभावमात्रपरत्वात्। भूरिश्रवस आश्रयस्य विनाशेन तन्नायिकया स्मर्यमाणत्वेन च श्रृङ्गारस्य वस्तुतोऽसत्वाच्च। 'निष्पन्नस्य रसस्यापरङ्गाभावाद्रसपदेनात्र स्थायिभावो द्रष्टव्य इति प्रदीपः।'[४] निष्पन्नस्य रसस्यापरंगत्वासम्भवेनात्र रस्यते, आस्वाद्यते, इति व्युत्पत्या स्थायिभावोऽत्र द्रष्टव्यः इति झलकीकरवामनः।[५] प्रदीपसुधासागरयोः श्रृङ्गारोचितरसनाकर्षित्वादिविलासस्मरणस्य शोकावेगजनकत्वस्य प्रतिपादितत्वेन न वाच्यापेक्षया श्रृङ्गारस्य प्राधान्यम्। तस्य चमत्कारजनकत्वमूलप्राधान्ये विवक्षिते रसनाकर्षित्वेत्यादीनामुपादानं व्यर्थं स्यात्। नहि रसनोत्कर्षादीन्येव श्रृंगारः। किन्तु

---

१. द्रष्टव्या-रसगंगाधरस्य सरला टीका, पृ० सं० २०।

२. अपराङ्गोदाहरणे 'अयं स रसनोत्कर्षी इत्यत्रापि वाच्यापेक्षया श्रृंगारस्य न प्राधान्यम्। शोकोत्कर्षकतया श्रृंगाररूपव्यंग्यापेक्षया वाच्यस्यैव चमत्कारकारित्वात्।'—गु० म० प्र०, पृ० सं० २०।

३. अत्र 'अयं स रसनोत्कर्षी इत्यत्र_चमत्कारित्वाद्' इतिनागेशोक्तिः मूलविरुद्धा केवलं भ्रमापादिकैव। पूर्ववृत्तश्रृंगारस्य करुणप्रसंगे शोकोत्कर्षकतया चमत्कारिवचनस्य प्रदीपाङ्ग ीकृतत्वात्।—र० गं० सरला, पृ० सं० २०।

४. का० प्रदी०, पृ० सं० १३५।

५. का० प्र० वा० टी०, पृ० सं० १९६।

तानि तद्व्यञ्जकानि। यत्र यत्र टीकायां श्रृंगारस्य शोकोत्कर्षकत्वमुक्तं तत्र तत्र श्रृङ्गारपदेन रतिरेव ज्ञेया। न च वाच्यार्थमाश्रित्य श्रृङ्गारस्याङ्गित्वेन तदपेक्षया तस्य प्राधान्यमिति वाच्यम्, चमत्कारप्रयोजकत्वस्यैव प्राधान्यनियामकत्वेनाङ्गित्वस्य प्राधान्याऽप्रयोजकत्वात्। अतएव 'क्वचिद्' इति काव्य-प्रकाश-प्रतीकमादाय पंचमोल्लासे 'यत्र यन्मुखेन चमत्कार स्तत्र तैनैव व्यवहार इत्यर्थः। प्राधान्यं च चमत्कारप्रयोजकत्वम्' इति झलकीकर वामनेनऽपि प्रोक्तम्। 'प्राधान्येन व्यपदेशा भवन्ति' इति मूलं तथैव व्याख्यातमन्यैरपि। ध्वनिकृताऽपि चमत्कारजनक-त्वमेव प्राधान्य-बीजमुक्तम्। न चाङ्गित्वस्य प्रधानव्यवहाराऽप्रयोजकत्वे करुणमादाय टीकाकारादिभिः कृतो ध्वनित्वव्यवहारोऽनुपपन्न इति वाच्यम्, 'करुणमादाय ध्वनित्वम्' इत्यस्य 'करुणमादाय न गुणीभूतव्यंग्यत्वम्' इति तात्पर्यात्। अतो श्रृंगारापेक्षया 'अयं स रशनोत्कर्षी इत्यत्र वाच्यस्य प्रधानतायाः प्रतिपादको मर्मप्रकाशः समीचीन एव।' प्राग्वृत्तश्रृंगारोचित-रसनाकर्षणादिविलासस्मरणस्य शोकपोषकत्वात्' इति वामनस्य टीकाऽपि वाच्यस्य करुणपोषकत्वं प्रतिपादयति।[१] करुणस्यैव प्राधान्येनास्वादगोचरत्वमिति त्वन्यत्। नह्यत्र तस्याऽऽस्वादविषयत्व रूपं प्राधान्यं ध्वनि-गुणीभूत-व्यंग्य-व्यवहार प्रतिपादकम्। अपि तु चमत्कारप्रयोजकत्वं तथा।

एवं नागेशदिशा 'यत्र व्यंग्यमप्रधानमेव सच्चमत्कारकारणम्...इत्यत्र विद्यमानेन एवकारेण व्यावर्त्यं' अयं स रशनोत्कर्षी" इत्यादि पद्यं नेति सिद्धम्। ततस्तद्व्यावर्त्यं किमिति विचारणीयम्। एवपदेन ध्वनित्वमेव व्यावर्त्यम्। 'वाच्यापेक्षया प्रधानीभूतं व्यंग्यान्तरमादाय गुणीभूतं व्यंग्यमादायातिव्याप्तिवारणायावधारणम्। तेन तस्य ध्वनित्वमेव।' इति पण्डितराजेनोक्तत्वात्। 'एतादृशं स्थलं कुत्र? यत्र व्यंग्यान्तरापेक्षया गुणीभूतं वाच्यापेक्षया च प्रधानं व्यंग्यम्।' 'इत्याकाङ्क्षायामाह रसचन्द्रिकाकृद्—

मूले वाच्यपदं लक्ष्यस्याप्युपलक्षणम्। निश्शेषेत्यादिपद्ये तदन्तिकगमनं लक्ष्यम्। 'तस्याधमस्यान्तिकं न गतासि' इत्यनेन विपरीत लक्षणया तल्लक्ष्यते। सम्भोगश्च व्यंग्यः। स च विदग्धनायिका-विप्रलम्भोद्दीपकतया गुणीभूतः। ततोऽपि विप्रलम्भस्य चर्वणाविश्राम धामतया प्राधान्यात्। सम्भोगरूपो व्यंग्यो लक्ष्यार्थपेक्षया प्रधान व्यंग्यपोषकत्वेन प्रधानीभूतः। अतोऽत्र आन्तरालिकं

---

१. का० प्र० वा० टी०, १९६।

दूतीसम्भोगरूपं व्यंग्यमादाय न पण्डितराजाभिमतोत्तमत्वम्, तस्य व्यंग्यस्य वाच्यार्थपेक्षया प्राधान्येन सर्वथा प्राधान्याभावात् । लक्षण एवकारोपादानेन नात्रोत्तमलक्षणप्रसक्तिः ।[१]

निश्शेषेत्यादौ तदन्तिक गमनस्य लक्ष्यत्वपक्षे तदन्तिकमेव रन्तुं गतासि 'इति काव्यप्रकाशोक्तौ' तदन्तिकमेव 'इतिपदोत्तरं' लक्ष्यते इत्यध्याहारः । ततोऽयमर्थः तदन्तिकमेव गतासीति लक्ष्यते, रन्तुं गतासीति व्यज्यते । एवं क्लिष्ट कल्पनया तदन्तिकगमनस्य लक्ष्यत्वं रमणस्य व्यंग्यत्वं चान्यत्र प्रतिपादितम् ।

वस्तुतो लक्षणा-कल्पना वृथा । तस्या बीजाभावात् मुख्यार्थ बाधादित्रयं तस्या बीजम् । यत्र दूत्यादेः स्वकामुकभोगः प्रमाणान्तरेण निश्चितस्तत्र 'तदन्तिकं न गतासि' इतिकथने भवतु नाम लक्षणा । यथा 'साहेन्ती सहि सुहअं' इति प्राकृतपद्ये । अत्र नायिकाया कामुककर्तृकदूतासंम्भोगो निश्चितः । अतो लक्षणा समीचीना । मुख्यार्थबाधस्य सत्वात् । अत्र च कामुकसम्भोगोऽनिश्चितः, मानाभावात्, तत्र कथं लक्षणा स्यात् ? यथा निश्शेषेत्यादौ । तदभिप्रायेण 'वापीं स्नातुम्' इति प्रोक्तम् । अत्र नायिकाया दूतीसम्भोगो न प्रमाणेन निश्चितः । अतएव प्रकाशकृता 'अधमपदेन' व्यज्यते इति उक्तम् । अधमपदेनैवात्र तथाविधव्यंग्यप्रतीतिः । वृत्ते वाक्यार्थबोधे समुत्प्लपवमानो बाधो न लक्षणाबीजम् ।[२] पण्डितराजेनापि चन्दनच्यवनादीनां विशेषणानां साधारण्यमुक्तम् । 'तदन्तिकमेव रन्तुं गतासि' इति व्यंग्यशरीरं स्वीकार्यम् ।

अतो रसचन्द्रिकाकृता कथितं तदन्तिकगमनस्य लक्ष्यत्वमसङ्गतम् । एवं 'लक्ष्यार्थस्य यथा—' निःशेषच्युत चन्दनम् 'इत्यादौ' इति विश्वनाथोक्तमपि ज्ञेयम् । अत एवकारव्यवच्छेदत्वेनाभिमतं निःशेषेत्यादिपद्यमेवं संगमनीयम् ।

"तदन्तिकमेव रन्तुं गतासि' इत्यान्तरालिकं व्यंग्यं' तस्याधमस्यान्तिकं न गतासि इति वाच्यापेक्षया विप्रलम्भपोषकत्वेन प्रधानीभूतं चरमव्यंग्यविप्रलम्भापेक्षया च गुणीभूतमिति तस्य न सर्वथा प्राधान्यम् । अतो नात्रोत्तमकाव्यलक्षणातिप्रसंगः । एवकारोपादानेन सर्वथाऽप्रधानचमत्कारकारणव्यंग्यस्थल एवोत्तोमकाव्यस्वीकारात् । इत्यलमप्रकृत पर्यालोचनया । प्रकृतमनुसरामः ।

---

१. द्र० , र० गं० घं० , ५४ पृ०

२. द्र० का० प्रदी० , १३ पृ०

उत्तमकाव्यस्योदाहरणं 'राघवविरहज्वाला' इत्यादिपद्यम् । अत्र 'जानकीकुशलावेदनेन राघवः शिशिरीकृतः' इति वाच्योपपादकं सर्वथाऽप्रधानं व्यंग्यं गुणीभूतमपि दुर्दैववशेन दास्य मनुभवद् राजकलत्रमिव अनिर्वचनीय-कमनीयताकृत् । व्यङ्ग्यचमत्कारासमानाधिकरण-वाच्यचमत्कारस्थले मध्यमं काव्यं तृतीयम् । यथा 'तनयमैनाकगवेषु...' इत्यादावुत्प्रेक्षायाश्चमत्कारकारकत्वम् । इदमेवार्थचित्रं मम्मटस्य । अर्थचमत्कृत्युपस्कृतशब्दचमत्कृतिप्राधान्यस्थले चतुर्थमधमं काव्यम् । यथा—'मित्रात्रिपुत्रनेत्राय'-इत्यादौ अर्थ-चमत्कृत्युपस्कृता शब्द-चमत्कृतिः । अत्रानुप्रासोऽलंकारः । इदमेव काव्यं शब्दचित्रं मम्मटस्य । यद्यप्यर्थ चमत्कृतिसामान्यशून्यशब्द चमत्कृतिस्थले पंचममपि काव्यं वक्तव्यं भवति तथापि तस्य रमणीयार्थप्रतिपादकशब्दत्वरूपसामान्यलक्षणानाक्रान्तत्वेन काव्यत्वमनिष्टं पण्डितराजस्य । शब्दार्थचमत्कृत्योः समप्राधान्ये मध्यममेव काव्यमभिमतम् । उदाहृतञ्च "उल्लासः फुल्लपङ्केरुह-पटलपतन्मत्त-पुष्पन्धयानाम् 'इत्यादिपद्यम् ।'

**मम्मटसम्मतकाव्य भेदानामालोचनाः—**

शब्दचित्रार्थचित्रयोरधमत्वेनैकत्वकथनमयुक्तम् । अनयोश्चमत्कारयोः तारतम्यस्योपलम्भात् । 'विनिर्गतं मानदमात्ममन्दिरात्' इत्यादिश्लोकस्य 'सच्छिन्नमूलः क्षतजेन रेणुः' इत्यादिपद्यस्य च 'स्वच्छन्दोच्छल इत्यादिपद्येनाऽभेदं कः सहृदयो ब्रूयात् अर्थचित्रस्य शब्दचित्रापेक्षयाऽधिकतर-चमत्कृति-हेतुत्वं न सहृदयानां परोक्षम् । सचेतसामनुभव एवात्रप्रमाणम् । एवं सति भेदहेतूपलम्भे सामान्येन तयोरधमत्व-प्रतिपादनमयुक्तम् । यदि तथा सत्यपि सामान्येनाऽधमत्वप्रतिपादनं तर्हि ध्वनि-गुणीभूत-व्यंग्ययोरीषद्विशेषयोः कथं भेदेन प्रतिपादनम् ।

**समन्वयः**

पण्डितराजस्योत्तमोत्तमं मम्मटस्योत्तमम् । तस्योत्तमं तस्य मध्यमम् । तस्य मध्यमाऽधमे तस्याधमम् । उभयनये रसाऽविवक्षा-स्थलेऽलंकारनिबन्धश्चित्रविषयः । उक्तं ध्वनिकृताऽपि तथा ।[1] मम्मटमते काव्यत्वस्य शब्दार्थयो र्व्यासक्तत्वम् । अतस्तयोस्तुल्य-चमत्कृति-जनकत्व-सिद्धान्तः । शब्दार्थचमत्कृत्योः साहित्यमत्र विवक्षितम् । तयोर्गुणप्रधानभावाभावेन सामान्येनाऽधमत्वेन निरूप-

१. रसभावादिविषयविवक्षाविरहे सति ।
अलंकारनिबन्धो यः स चित्र-विषयो मतः ॥ —ध्व० लो० ।

णम् । शब्दार्थयो: काव्यशरीरत्वम् । अलंकारणां शरीराश्रितत्वमविशिष्टम् । भामहेनापि निगदितं, यत् केचिच्चशब्दालंकारमेव प्रधानं मन्यन्ते, केचिच्चार्थालंकारमेव । शब्दालंकार-प्राधान्यवादिनां मतेऽर्थालंकार स्यार्थालंकारप्राधान्यवादिनां मते शब्दालंकारस्य च बाह्यत्वम् । भामहस्तु समन्वयवादी । स तयोर्गुणप्रधानभावं न मन्यते । स तद्यं सामान्यत: काव्ये स्वीकरोति । यत: 'न कान्तमपि निर्भूषं विभाति वनिताननम्' इति तदीय: समुद्घोष: ।[1] एवं मम्मटेनापि सामान्यत: शब्दार्थालंकारा गृहीता: । अतस्ताज्जन्य-चमत्कारे तारतम्याभावमवगत्य चित्रत्वेन शाब्दाआर्थाश्चालंकारा गृहीता: । नहि सहृदयान्त: प्रविश्य केनचिद् निभालितं यत् शब्दचमत्कृत्यपेक्षयाऽर्थचमत्कृतौ तारतम्यमनेनाऽनुभूते । केचित् शब्द चमत्कृतिं प्रधानं मन्यन्ते, केचिच्चार्थ-चमत्कृतिम् । दृश्यते हि केचिदर्थ-चित्रं विहाय शब्दचित्रं प्रेम्णा रचयन्ति, अध्येतारश्च शाब्दक्रीडायां विचक्षणा आनन्दमनुभवन्ति । ते पामरा इति कथनं तु स्वहृदयत: । तैरपि अर्थचित्रे भृशमानन्दमासादयन्तस्ते सहृदया: पामरा इति वक्तुं शक्यते । शब्दचित्रं पामरश्लाघ्यं नार्थचित्रमितिकथने नास्ति प्रमाणम् । न च सहृदयानामनुभवस्तथा, सहृदयानां विभिन्नरुचित्वात् । शब्दचित्रेऽधिकं चमत्कारमनुभवन्तोऽसहृदया इति कथनमयुक्तम् । अत्र विचारयन्तु विपश्चित: । क्व सागरायमाणा पण्डितराजस्य धी: क्वचाहमुडुपबुद्धि: ।

---

१. "रूपकादिरलंकारस्तथान्यैर्बहुधोदित: ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ॥
रूपकादिरलंकारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छत्यलंकृतिम् ॥
तदेतदाहु: सौशब्द्यं नार्थ-व्युत्पत्तिरीदृशी ।
शब्दाभिधेयालंकारभेदादिष्टं द्वयं तु न: ॥'—भामहा० १,पृ० १३,१४,१५ कारिका: ।

## द्वितीयोऽध्यायः

# रस-ध्वनि-रीति-गुण-विषयेषु तुलना

रसः काव्यस्यात्मा। एतस्य विवेचनं नानाचार्यैरकारि। तद्विवेचन-विषये नानापारिभाषिका वेदान्तादिदर्शनप्रसिद्धाश्च शब्दाः प्रयुक्ताः। तेषामभिधेयज्ञानमन्तरा रसविषयकविचाराणां ज्ञानमसम्भवमिति प्राक् तत्तत्पारिभाषिक पदार्थ-स्फोरणं क्रियते—

**पारिभाषिकाः शब्दास्तदर्थांश्चः–**

**विभावः—**

लोके वासनारूपरत्यादीनामुद्बोधकानि नायकचन्दनोद्यानादीनि कारणानि कथ्यन्ते। तान्येव काव्यनाट्ययोर्निबद्ध्यमानानि विभावपदव्यपदेश्यानि भवन्ति। अतो लोके रत्याद्युद्बोधकारणं विभाव इति निष्कर्षः।[1]सोऽपि द्विधा। आलम्बनोद्दीपनभेदात्। रत्याद्युद्बोधका नायकादय आलम्बनविभावाः। उद्बुद्धरत्याद्युद्दीपकाश्चन्द्रचन्दनादयः पदार्थाः उद्दीपनविभावाः।

**अनुभावः—**

लोके रत्याद्युद्बोधानन्तरं नायकयोः जायमाना भुजाक्षेपकटाक्षरोमाञ्चादयस्तत्कार्यभूताः, अतो रत्याद्युद्बोधज्ञापका अनुभावव्यपदेशभाजो भवन्ति काव्ये। अर्थात् कार्यमनुभावः। रत्याद्युद्बोधानन्तरं जायमानत्वेनाऽनुभाव इत्यन्वर्थं नाम।[2]

---

१. रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः। —सा० द० ३, प० ५३ कारिका।

२. उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्।
लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः॥ —सा० द० ३, प० १३२-३४ कारिके।

**व्यभिचारी :**

उद्बुद्धरत्यादिसहकारिणो लोके सहकारि शब्दव्यपदेश्या: स्वाविर्भावतिरोभावाभ्यां स्थायिनि उन्मज्जन्तो मज्जन्तश्च विशेषेण चरन्तो निर्वेदादयस्त्रयस्त्रिंशत् स्तोकविभावजन्मानो रत्यादयश्च व्यभिचारिण: ।[१]

**स्थायिभाव:**

वेदान्ताभिमतान्त:करणतत्व-चित्तगा वासनारूपा रत्यादय स्थायिभावपदेन व्यपदिश्यन्ते । अर्थात् त एव स्थायिभावा: । ते च नव । नायकालम्बनप्रेमाभिधानचितवृत्ति-विशेषो रतिराद्यस्थायिभाव: । पुत्रादिवियोगजविकलताख्यचित्तवृत्तिविशेष: शोको द्वितीय: । ब्रह्म-जगन्नित्यत्वाऽनित्यत्वविवेकजो विषयवैरागाख्यश्चित्तवृत्तिविशेषो निर्वेदस्तृतीय:, परपराक्रमादिजन्मा औन्नत्याख्य: स उत्साहश्चतुर्थ:, अलौकिक वस्तुदर्शनादिजन्यो विकासाऽपराभिधान: स विस्मय: पंचम:, वागङ्गादिविकारविलोकनजन्य: स एव हास: षष्ठ:, भीषणव्याघ्रभूतादिदर्शनजो विकलताख्य: स भयं सप्तम:, गुरुबधबन्धादिमहापराधजन्य: प्रज्वलनाख्य: स क्रोधोऽष्टम:, कुत्सितदुर्गन्धमांसादिवस्तुदर्शनादिजन्यो गर्हाख्यश्च स जुगुप्सा नवम: । एषां स्थायित्वं चाप्रबन्धमभिव्यज्यमानत्वात् । मुहुर्मुहुरभिव्यक्तिरेव स्थायिपदार्थोऽत्र द्रष्टव्य: । न च वासनात्वेनैषां चित्ते स्थायित्वमिति वाच्यम्, तथात्वे व्यभिचारिषु लज्जादिषु अपि स्थायित्वापत्ते: । व्यभिचारिणामपि वासनात्मतया तत्र सर्वदा स्थिते: । अतो रत्यादीनामभिव्यक्ते भूयोभूयस्त्वं स्थायित्वम्, तस्या अतथात्वे एषामपि व्यभिचारित्वमुक्तम् । लज्जादीनामभिव्यक्ते र्विद्युदुद्योतवदस्थायित्वम् । अत एव ते व्यभिचारिण: ।

---

१. अत्राह– अथ व्यभिचारिण-इति कस्मात् । उच्यते-वि-अभि-इत्येतावुपसर्गौ, चर इति गत्यर्थो धातु: । विविधम् आभिमुख्येन रसेषु चरन्तीति व्यभिचारिण: । वागङ्गसत्त्वोपेता: प्रयोगे रसान् नयन्तीति व्यभिचारिण: । अत्राह कथं नयन्तीति । उच्यते लोकसिद्धान्त एष: यथा सूर्य इदं दिनं नक्षत्रं वा नयतीति । न च तेन बाहुभ्यां स्कन्धेन वा नीयते । किन्तु लोकप्रसिद्धमेतत् । अथ यथेदं सूर्यो नक्षत्रं दिनं वा नयतीति । एवमेते व्यभिचारिण इत्यवगन्तव्या: । —ना० शा० तमोऽध्याय: ।

**सविकल्पकज्ञानम्:—**

नामजात्यादियोजनासहितं ज्ञानं सविकल्पकं ज्ञानम् । अर्थाद् यस्य वस्तुनो विषये किञ्चिद्वक्तुं शक्यते, यत्र च जात्यादिभानं भवति तस्य ज्ञानं सविकल्पकम् । यथा घटज्ञाने घटत्व- रूप जातेर्भानं भवति । तत्र घटत्वं विशेषणं घटश्च विशेष्यम् तद्विषये वक्तुं शक्यते यदयं घटः । अतोऽस्य ज्ञानं सविकल्पकम् । विशेष्यविशेषणतावगाहि ज्ञानं तदिति यावत् ।

**निर्विकल्पकज्ञानम् :—**

नामजात्यादियोजनारहितं ज्ञानं निर्विकल्पकम् । सर्वप्रथमं प्रायः समेषां निर्विकल्पकमेवज्ञानमुदेति । यथा बालकस्य घटज्ञानं निर्विकल्पकम् । स यत्किञ्चिदेतदिति मन्यते । कम्बुग्रीवादिमदिदं वस्तु किमिति प्रश्नस्योत्तरं स दातुमसमर्थः । यतोऽसौ तन्नाम न वेत्ति । जातिमपि तथा । अतो नामजात्यादियोजना-रहितत्वेन तज्ज्ञानं निर्विकल्पकम् । निष्प्रकारकं ज्ञानं निर्विकल्पकमिति लक्षणान्तरम् ।

**अनुमानम् :—**

अनुमानं प्रमाणविशेषोऽनुमितिश्च तत्फलम् । तच्च लिंगपरामर्शः । येनानुमीयते तदनुमानम् । अतो लिंगपरामर्शोऽनुमानम् । तस्यैवानुमितिजनकत्वात् । लिंगञ्च व्याप्तिबलेनाऽर्थगमकम् । यथा धूमो वह्नेर्लिंगम् । "यत्र-यत्र धूमस्तत्र तत्र वह्निः" इति व्याप्ति-बलेन धूमोऽग्नेर्गमकत्वाल्लिंगम् । तस्य लिंगस्य परामर्शश्च तृतीयं ज्ञानम् । व्याप्तिग्रहं यावन्महानसादौ धूमस्य ज्ञानं प्रथमम् । पर्वते पुनः तस्य ज्ञानं द्वितीयम् । ततो धूमदर्शनेनोद्बुद्ध संस्कारस्य व्याप्तिस्मरणम् । ततोभूयः पर्वते धूमज्ञानं तृतीयम् । इदमेव परामर्शः । तदनन्तरं पर्वते धूमेन वह्नेरनुमितिः ।[१]

**प्रमाता :**

विभुरात्मानन्दरूपः । तद्वशेनैवानात्मसु पुत्रदारादिषु आनन्दानुभवः । आत्मीयत्वाभाववति गुणवति शत्रावपि नानन्दानुभूतिरगुणेऽपि पुत्रे चात्मीये तदनुभूतिः । तस्य सर्वदाऽऽनन्दात्मकतयाऽनुपलब्धेरानन्दांशावरकं किमप्यज्ञानं कल्प्यते । स परमात्मा सर्व-प्रकाशकः । स चान्तःकरणादिभिस्तैजसैः परिच्छिद्यमानोऽनेकत्वं दधन्नानासुखदुःखादिभेदेन भिन्नतां लभमानो जीवरूपतां दधाति । रामगीतायामपि

१. द्रष्टव्या, त० भा०, ७१, ७२, ७७ पृष्ठे ।

बुद्धिनामकेऽन्तःकरणतत्वे प्रतिबिम्बितस्य चैतन्यस्य जीवरूपतोक्ता।[१] स च जीवोऽन्तःकरणावच्छिन्नोऽन्तःकरणगतजडत्वदुखित्वादीनि स्वीयानि मन्यते। अतो दुःखी जडोऽहमिति चिन्तयति। चैतन्यगतानन्दादीनां धर्माणां विशेषणे अन्तःकरणेऽध्यासः। एवमितरेतराध्यासः। स जीवः प्रमाता।

**साक्षिभास्य :—**

साक्षिणा भास्यः प्रकाश्यः साक्षिभास्यः। साक्षिपदार्थो विवेचनीयः। विशेषणान्तःकरणप्रभावप्रभावितस्य दुःखिनो जडस्य प्रमातुः स्वतः सर्वप्रकाशकत्वं नोपपद्यते। तस्य प्रमातृत्वधर्मः परिमितः। परिणामिनाऽन्तः-करणेन प्रभावितस्य तस्यैकावस्था न सम्पद्यते। अतो जीवस्य साक्षी अपरः स्वीक्रियते। सोऽपि साक्षी, अन्तःकरणोपाधिभेदेन नाना स्वप्रकाशानन्दरूपः। अन्तःकरणं तत्रोपाधिः। उपाधिश्च साक्ष्यन्तराद् व्यावृत्तिमात्रं करोति। न तु साक्षिणः कार्येऽन्वेति। स साक्षी चान्तःकरणपरिणामादभिद्यमानः पूर्वापरावनुसन्दधाति, यथा लोके साक्षी परकृतं पश्यति स स्वसम्बन्धादन्यान् विषयान् प्रकाशयति च। जीवस्य अन्तः-करणपरिणामवशेनैकावस्थाया असम्भवेन पूर्वमहं दुःखी आसम् इदानीं सुखी इति पूर्वापरानुसन्धानं नोपपद्यत इति तस्य साक्षिणः स्वप्रकाशस्वरूपस्य परिकल्पना।[२] कारणवशेनान्तः-करणप्रभावे निरस्ते स्वानन्दरूपेऽवस्थितो विगलित-परिमितप्रमातृत्वधर्मो जीव एवसाक्षी सम्पद्यते।स एवात्र साक्षि-शब्द-बाच्यः। तेनान्तः-करणवर्तिनः सुखादयो वासनारूपा रत्यादयश्च प्रकाश्यन्ते स्वप्रकाशेन च शोकादीनां दुःखदातृत्वादयो धर्मा निरस्यन्ते स च स्वयं प्रकाशते। त एव रत्यादयः पदार्थाः साक्षिभास्य-शब्देन निगद्यन्ते। बाह्या घटपटादयः पदार्था न साक्षात् साक्षिभास्याः। तेषामन्तःकरणद्वारा परम्परया साक्षिभास्यत्वात्। यथा सलिलं प्रणालिकया क्षेत्रे गत्वा त्रिकोण-चतुष्कोणादि-क्षेत्राकृतिं दधाति तथा तैजसमन्तःकरणमिन्द्रिय प्रणालिकया विषयदेशं गत्वा तत्तद्-विषयाकृतिं दधाति। तदान्तः-करणस्य तिस्रोऽवस्था भवन्ति। एकान्तरिकी यस्या प्रमातेति व्यपदेशः, द्वितीया मध्ये दण्डाकारा, या प्रमाण-पदप्रतिपाद्या, तृतीया च विषयाकारा यस्याः प्रमिति-पद-

---

१. अनाद्यविद्योद्भव-बुद्धिबिम्बितो जीवः प्रकाशोऽयमितीर्यते चितः॥ —रामगीता।

२. द्वासुपर्णा सयुजा सखाया, समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्याद्वत्य-नश्नन्नन्यो अभिचाकशीति॥
—मु० स०, सृ० मु०, प्र० ख०, १, श्लोकः।

बाच्यता। आसां तिसृणामेकदेशकालस्थितत्वे प्रत्यक्षत्वव्यवहारः, अतथात्वे च परोक्षत्वव्यवहारः। आभिरवस्थाभिरवच्छिन्नं चैतन्यमपि प्रमातृ-प्रमाणविषय-चैतन्य-शब्दैर्निगद्यते। अन्तःकरणधर्माणां सुखदुःखादीनां ज्ञान-काले सदैवैकदेश-स्थितत्वेन प्रमाणविषययोरभेदः। इन्द्रियद्वारा न दण्डाकारावस्था। अतो न बाह्य-प्रमाणापेक्षा। अतः प्रमाणनिरपेक्षा तेऽन्तःकरणधर्माः साक्षिभास्याः कथ्यन्ते। सांख्य-नये द्विविधं प्रमाणम्-इन्द्रियाख्यं बुद्धिवृत्तिश्च पौरुषेय-बोधस्य प्रमात्वे बुद्धिवृत्तेः प्रमाणत्वम्। कदाचिदुभयोः प्रमाणत्वम्। इति त्रिविधमपि प्रमाणमुक्तम्। अन्तःकरणस्थधर्मप्रमितौ बुद्धिवृत्तिः प्रमाणम्।[१] विषयप्रमाणयोरेकत्र सत्त्वेनैत-न्नयेऽपि तेषां धर्माणां साक्षिभास्यत्वम्।

**चर्वणा :—**

इयं चैतन्यगतानन्दांशावरणभङ्गः। प्रमातृगतस्याऽन्तः-करणप्रभावस्य निरास इति यावत्। निरस्ते तत्प्रभावे चैतन्यस्य जीवस्य स्वरूपेऽव स्थानम्। भङ्गोऽभावः। अभावश्चाधिकरणरूपः, अधिकरणं च प्रमुष्टपरिमितप्रभातृभावो जीवः। रसाकारा-वृत्ति र्वा चर्वणा आस्वाद इत्यनर्थान्तरम्।

**रसस्वरूपनिरूपणम् :—**

"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति भरतोक्तं सूत्रं रसस्व-रूप-प्रतिपादकम्। अत्रत्यसंयोग-निष्पत्तिशब्दद्वयमवलम्ब्य नाना व्याख्या मनी-षिभिः कृताः। अतो रसस्वरूपनिर्णये महान् विवादः। काव्यप्रकाश-रसगंगाधरादिग्रन्थोक्तार्थमाश्रित्य तुलनात्मककार्यसौविध्याय नानाविदुषां मते संक्षेपतो रसस्वरूपं निरुप्यते—

**प्रथममते रसः—**

संयोगशब्दो जन्यजनकभाव-गम्यगमकभाव-पोष्यपोषकभावरूपसम्बन्धत्र-यवचनः। एवं निष्पत्ति पदं जन्म-प्रतीति-पुष्टिपरम्। स्थायिभावेन विभावस्य जन्य-जनकभावः, अनुभावस्य गम्य-गमकभावः, व्यभिचारिणश्च पोष्यपोषकभावः सम्बन्धः। तेन सीतोद्यानाद्यालम्बनोद्दीपनकारणै र्विभावैर्जनितः, तत्कार्यैरनुभावैः प्रत्यायितो भुजाक्षेपकटाक्षादिभिः, व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिः पोषितः

---

१. द्रष्टव्यम्, सां का०, का० ४, थोंपरि श्रीकृष्णबल्लभाचार्य प्रणीतं स्वामिनारायणभाष्यम्।

वस्तुतोऽनुकार्ये रामादौ स्थितः, रामादिरूपतानुसन्धातरि नटेऽपि सादृश्यवशात् प्रतीयमानो रत्यादिकः स्थायी श्रृङ्गारादिको रस इति भट्टलोल्लटः। अत्र मते रसो भ्रान्तिविषयो रज्जुनिष्ठसर्पवत्।

**द्वितीयमते रसः—**

विभावादीनां स्थायिभावेनानुमाप्यानुमापकभावरूपो हि सम्बन्धः सूत्रस्थ संयोगपदवाच्यः। निष्पत्तिरनुमितिः। अतः सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया प्रतिपत्त्या चित्र-तुरगादिन्यायेन ग्राह्ये संदिग्धसाध्यवद्रूपे पक्षे नटे काव्यार्थानुसन्धानबलात् शिक्षाभ्यासादिवलाच्च तेनैव प्रकाशितैः कृत्रिमैरपि तथाऽनङ्गीक्रियमाणैः विभावानुभावव्यभिचारि-पद-वाच्यैः कारण-कार्यसहकारिभिः परामृश्यमानैर्लिंगैरनुमीयमानः, काव्यवस्तु-सौन्दर्यवशादन्यानुमानविषयविलक्षणः, रसनीयो नटेऽसन्नपि स्ववासनया सामाजिकैरास्वाद्यमानः स्थायी रस इति लौकिकत्वेन सान्तरायत्वेन सामाजिकानिष्ठत्वेन चानुकार्यस्थं भट्टलोल्लटोक्तं रसमसहमानः रसस्यानुमितिविषयत्वं चक्षाणः श्रीशङ्कुक आह। "अयं नटो दुष्यन्तः शकुन्तला-विषयकरतिमान् तद्विषय-कटाक्षादिमत्वात्" इत्यनुमित्याकारः।

**तृतीयमते रसः —**

भोज्यभोजकभावः सम्बन्धः संयोगशब्दवाच्यः।[१] निष्पत्तिश्च भुक्तिः। सम्यक् साधारणतया योगः संयोगः। भावकत्वव्यापारेण साक्षात्कारेण, रजस्तमसी अभिभूयोत्थिन सत्त्वेन प्रकाशितस्य स्थाय्युपहितस्य चैतन्यस्य विषयीकृतिः।[२] इति द्विधा संयोगनिष्पत्तिपद-व्याख्योपलभ्यते। तत्र चरमा व्याख्या पण्डितराजस्य। सैव मनोहरेति मन्मतिः। स्फुटत्वात्।

इदं मतं भट्टनायकस्य। स रसस्योत्पत्तिमनुमितिमभिव्यक्तिं च खण्डयति। यथा—रसस्याऽनुकार्य-गतत्वेन नोत्पत्तिः। अनुकार्य-गतस्य तस्य लौकिकत्वेन रसपदावाच्यत्वात्। नटगतत्वेनाऽनुमितिरपि विरुद्धा। विभावादीनां वास्तविकत्वाभावात्। नापि सामाजिकगतत्वेनाभिव्यक्तिः। रसस्य सिद्धत्वाभावात्। सिद्ध-

---

१. विभावादिभिः संयोगाद् भोज्यभोजकभावसम्बन्धाद् रसस्य निष्पत्ति भुंक्तिरितिसूत्रार्थः। —का० प्र० वा० टी०, ९० पृष्ठ

२. द्रष्टव्यः रसगंगाधरः १२८ पृ०।

स्यैव व्यञ्जकैर्व्यङ्ग्यत्वम्। यथादीपेन सिद्धस्य घटस्य। एवमप्यन्यनिष्ठस्य स्थायिनोऽन्येन भोगस्यासम्भव:, अतिप्रसङ्गादि, इति चेत्, कथ्यते—

काव्यनाट्ययो: शब्देषु त्रयो व्यापारा:। अभिधा भावकत्वं भोजकत्वं च। आद्यापि द्विधा। निरन्तरसान्तरार्थनिष्ठत्वेन। निरन्तरा शक्तिपदव्यपदेश्या। सान्तरार्थनिष्ठा स्वाश्रय-प्रतिपादकत्वसम्बन्धेन शब्द-निष्ठा द्वितीया लक्षणा-पद-व्यपदेश्या। द्विविधया आद्यया काव्यनाट्ययो र्विभाव। दय: पदार्था उपस्थाप्यन्ते। साधारणीकरणनाम्ना द्वितीयेन व्यापारेण भावकत्वेन तेषां साधारणीकरणम्। साधारणीकरणं च तेषां दुष्यन्त-शकुन्तलादिविभावादीनां दुष्यन्तत्वशकुन्तलात्वादि-विशेषधर्मनिरासद्वारा साधारण-नायकत्व-कामिनीत्वादिधर्मैरुपस्थापनम्। तत्र साधारणीकृतकामिनीत्वादयो धर्मा न विभावतावच्छेदका:। तथात्वे कामिनीत्वादि धर्मवता स्वस्रादिनाऽपि रसोद्बोधापते:। अतोऽगम्यात्वप्रकारकज्ञानविशेष्यतावच्छेदकातिरिक्तानामेव कामिनीत्वादीनां विभावतावच्छेदकत्वम्। "इयमगम्या" इति ज्ञाने अगम्यात्वं प्रकार:। विशेष्यमियम्पदवाच्या स्वस्रादिकामिनी। तन्निष्ठा विशेष्यता। तस्या अवच्छेदकं कामिनीत्वमात्रं न विभावतावच्छेदकम्। एवं साधारणीकृतैर्विभावादिभिस्तृतीयेन भोजकत्वव्यापारेण रजस्तमसी अभिभूयाविर्भूत-सत्त्वजनित-निजचित्स्वभावनिर्वृतिविश्रान्ति-लक्षणेन साक्षात्कारेण विषयीकृत: साधारणीकृत: स्थायी रस:। तादृशसाक्षात्कारेण स्थायिनो विषयीकरणमेवभुक्ति:।

**चतुर्थमते रस:—**

संयोगो व्यंग्यव्यञ्जकभाव:। निष्पत्तिरभिव्यक्ति:। काव्येन दुष्यन्तशकुन्तला-तद्भुजाक्षेप-कटाक्ष-निर्वेदादय: पदार्था: कारण-कार्यसहकारिपदवाच्या दुष्यन्तत्वशकुन्तला-त्वतत्सम्बन्धित्वादिधर्मविशेषेणोपस्थाप्यन्ते। ते च सहृदयज्ञान-द्वारा तेषां हृदयं प्रविशन्ति। ततस्ते सहृदयनिष्ठ-काव्यार्थ-भावनानुगुणवासना-रूप-सहृदयतावशोन्मिषितेन भावनाविशेषण भूयोभूयो भाव्यमाना परित्यक्तदुष्यन्तशुक्तलात्वादिधर्मविशेषा: साधारण-कान्तत्वादि-धर्मेणोपस्थाप्यमाना: साधारणीकृता विभावानुभावव्यभिचारिपदव्यवहार्या भवन्ति। एवं काव्यसमर्पिता दुष्यन्तादयोऽलौकिका: भवन्ति। साधारणीकरणार्थं नात्र मते काव्यनाट्ययोर्भावकत्वव्यापारकल्पना। सहृदयतावशेनोद्भूतेन व्यापारविशेषेण कारणकार्यादीनां साधारणीकरणात्। तैश्च विभावादिभि: सम्भूयालौकिको व्यञ्ज-

नाभिधानो व्यापारो जन्यते।[१] रसचन्द्रिकाकारमतेऽलौकिको व्यापारो भावना।[२] ततो जीवगताज्ञानावरणभंगः। ततः प्रमाता जीवोऽन्तःकरणस्य परिच्छेदं (परिमित-प्रमातृत्वं) निरस्य साक्षिरूपतां भजते। तेन च साक्षिणा स्वयम्प्रकाशमानेन सस्वरूपानन्दं विषयीक्रियमाणो रत्यादिरेव रसः। रत्यादेश्च वासनारूपेणाऽन्तःकरणे चित्ते विद्यमानत्वम्। तस्यैव चित्प्रकाशेन प्रकाशः। आनन्दांशा-वरणनिवारिकाया व्यञ्जनाया अलौकिकत्वं काव्यार्थभावनाजन्यत्वात्। रसचन्द्रिकाकाराभिमत-भावनाया अलौकिकत्वं चानन्दांशावरणाऽपाकरणात् कार्यादपि। अन्यवस्तुभावना प्रकाशांशस्यैवावरणमपाकरोति, न तु काव्यार्थ-भावनावदानन्दांशावरणमपि। 'व्यक्तस्तैर्विभावाद्यैस्थायी भावो रसः' इति मम्मटोक्तकारिकायां व्यक्तपदेन व्यक्तिविषयीकृतः इत्यर्थो विवक्षितः, व्यक्तिश्च भग्नावरणं प्रमातृचैतन्यम्। शरावादिपिधानाऽपसारणेऽज्ञानावरणभङ्गे परित्यक्त-परिमितप्रमातृभावस्य साक्षिणः प्रमातुश्चैतन्यस्य दीपस्येव स्वत आनन्दांशेन सह प्रकाशः प्रकाशनं च घटादिपदार्थानामिव रत्यादीनाम्। तेन प्रमात्रा विभावादिसंवलिता रत्यादयः पदार्थाः स्वरूपानन्देन सह प्रकाश्यन्त इति यावत्। विभावादीनामपि स्वप्नतुरगवद् रजतरङ्गवच्च साक्षिभास्यत्वम्। एवं चैतन्यविशिष्टो रत्यादिरेव रस इति मम्मटस्याभिनवगुप्तादीनां च मतम्। विभावादिचर्वणाया आवरणभंगस्य चोत्पत्तिविनाशयोरुपचारेण रस उत्पत्तिविनाशव्यवहारौ। एवं चैतन्यांशं रत्याद्यंशं चादाय रसे नित्यत्व-कार्यत्वादीनां व्यवहारः। विभावादिचर्वणावधिरेवावरणभंगः। अतस्तच्चर्वणानिवृत्तौ आवरणभंगे भग्नेऽज्ञानावरणावृतं चैतन्यं स्थायिनं न प्रकाशयति स्वयं च न प्रकाशते। अतएव काव्यप्रकाशे "विभावादिजीवितावधिः" इत्युक्तम्। रसो न ज्ञाप्यः। ज्ञापनात् पूर्वं तदसत्वात्। नापि कार्यः विभावादिनिमित्तकारणनाशेऽपि तस्य स्थितेः प्रसंगात्। विभावादिचर्वणानिष्पत्त्या स कार्योऽपि। युक्त-युञ्जानयोगिसंवेदन-विलक्षणेन सहृदय-संवेदनेन विषयीकरणात् स प्रत्येयोऽपि। एवं रसोऽलौकिकः। विभावादिपरामर्शप्रधानत्वेन स्वसंवेदनसिद्धत्वेन च नास्य रसस्य निर्विकल्पकसविकल्पकज्ञानवेद्यत्वमपि। योगिसविकल्पकसमाधाविव जायमाना विभावादिचर्वणामहिम्ना सहृदय-सहृदयतावशोन्मिषितेन तत्तत्स्थाय्युपहितस्वस्वरूपानन्दाकारा चित्तवृत्तिरेव वा रसः, तन्मयीभवनमिति यावत्, इति पण्डितराजो मम्मटादि

---

१. अलौकिकोव्यापारः (व्यञ्जनाख्यः) प्रादुर्भाव्यते। —र० गं० सरलटीका, पृ० २६।

२. अहन्तु प्रत्येमि, भावनैवालौकिको व्यापारः। —रस चं० युत र० गं०, पृ० ६९

मत एवाह । सा च चित्तवृत्तिः काव्य-व्यञ्जनामूला । एतादृश चित्तवृत्तिरूपस्य रसस्य कथने मध्ये व्यापारकल्पनजं लाघवं बीजमिति नागेशभट्टः ।[१]नागेश स्येदं कथनमस्फुटं समन्वयाभाववच्चेति रसचन्द्रिकाकृत् ।[२]

**पञ्चममते रसः—**

भावनाविशेषरूपो दोषः संयोगपदार्थः । रसनिष्पत्तिः अनिर्वचनीयदुष्यन्तरतिरूपस्य रसस्योत्पत्तिः । रसगङ्गाधरेऽस्य मतस्योल्लेखः । काव्ये कविना नाट्ये नटेन च प्रकाशितैर्विभावादिभि र्व्यञ्जनया दुष्यन्तादौ शकुन्तलाविषयकरतेर्ग्रहणम् । ततो सहृदयतावशेन भावनाविशेषरूपस्य दोषस्याविर्भावः । तेन दोषेण सहृदयानामात्मा कल्पितदुष्यन्तत्वेनाऽऽच्छाद्यते । अर्थात् 'दुष्यन्तोऽहं शकुन्लाविषयकरतिमान्' इति स्वात्मानं प्रतिपद्यते । ततस्तदन्तः-करणे रज्जौ सर्प इव समुत्पद्यमानोऽन्तः-करणधर्मत्वेन साक्षिभास्यो दुष्यन्तादिनिष्ठ-शकुन्तला-विषयको रत्यादिरेव रसः । अयं दोषविशेषस्य कार्यः । स्वोत्तरवर्तिनाह्लादेनाभेदग्रहात् सामाजिकनिष्ठदुष्यन्तादिरत्यादेः सुखपदवाच्यत्वम् । एतादृशरसस्य व्यंग्यत्वं वर्ण्यत्वं च काव्यादिप्रकाशित-विभावादि-व्यंग्यवास्तविकदुष्यन्तादिनिष्ठरत्यादिना भेदाऽग्रहात् । लोकोत्तरत्वं चास्य रसस्य भग्नावरणचिदानन्देन सह गोचरीक्रियमाणत्वात् । विषयतादशायां न रतिचिदानन्दयोर्भेदाग्रहः । 'अहं दुष्यन्तः शकुन्तलाविषयकरतिविशिष्टः' इति बोधे विशेष्यतावच्छेदकं दुष्यन्तत्वं रंगस्थरजतत्ववदनिर्वचनीयम् । अनिर्वचनीयत्वञ्च सत्त्वेनाऽसत्त्वेन च निर्वचनाऽनर्हत्वम् । तच्च दुष्यन्तत्वं न सत्, विभावादिभावनाकालातिरिक्त-कालेऽसत्त्वात् । नाप्यसत् । शशविषाणवत् कदाप्यभासनापत्तेः, विभावादि-भावनाकाले भासनात्तदानीं सत्त्वाच्च । तस्मात् सदसद्-भिन्नमनिर्वचनीयमेव तत् । अतः 'दुष्यन्तनिष्ठरत्यादे लौकिकत्वेनाऽरसत्वम् सामाजिकस्थस्य तदसम्बन्धिभिः शकुन्तलादिभिरनभिव्यक्तिः, सामाजिके दुष्यन्ताद्यभेदबुद्धे र्बाधबुद्धिपराहतत्वम्' इत्यादिकथनमपास्तम् । भट्टनायकाभिनवगुप्तादिभिः प्रोक्तं विभावादिसाधारणीकरणं दोष विशेषकल्पनमन्तराऽनुपपन्नम् । अतोऽवश्यकल्प्ये दोष विशेषे तेनैव दुष्यन्ताद्यभेदबुद्धिसिद्धिः ।

---

१. मध्ये व्यापार-कल्पनजलाघवायाऽऽह-यद्वेति । —गु० म० प्र०, पृ० २७ ।

२. मध्ये व्यापारकल्पनजलाघवायाह यद्वेति मर्मप्रकाशोऽवतारयति तन्न स्फुटं 'समन्वयमेति इति ध्येयम् ।' —रस० चं० शु० र० गं०, पृ० ७४-७५ ।

न चानुकार्यगतरत्यादेर्भावनाविशेषरूपदोषमहिम्ना सामाजिकान्तः-करणे समुत्पादे स्वीकृते सुखोत्पत्तिः, किन्तु तद्गतशोकादेरुत्पादे दुःखापत्तिरिति वाच्यम्, सामाजिके काल्पनिक शोकादीनां दुःखाजनकत्वात् । न च काल्पनिकानामपि रज्जु-सर्पाणां भयोत्कम्पादि-जनकत्वस्य दृष्टत्वेन तेषामपि दुःखजनकता सिद्धा, अन्यथा रत्यादिना अपि सुखाभावापत्तिरिति वाच्यम्, लोकोत्तरकाव्यव्यापारमहिम्ना दुःखजनकानामपि सुखजनकत्वाङ्गीकारात् सुखानुभवस्य सहृदय-साक्षिकत्वाच्च । अश्रुपातादयश्च चेतसो दुतत्वात् । करुणप्रधानानां काव्यानां दुःखदातृत्वेन कोऽपि सहृदयः तदध्ययनादौ न प्रवृत्तः स्यात् । उक्तं पण्डितराजेन—

"अयं हि लोकोत्तरस्य काव्य-व्यापारस्य महिमा, यत्प्रयोज्या अरमणीया अपि शोकादयः पदार्था आह्लादमलौकिकं जनयन्ति ।" एवं नव्यानां मतम् ।

**अस्मिन्मत आक्षेपः—**

अस्य मतस्यासारतायां भाषानुवादभूमिकायां चत्वारो दोषाः प्रत्ताः । अस्य मतस्याऽप्रचारः प्राचीनैरभिनवगुप्तादिभिरग्रहणञ्च प्रथमः । यदि सामाजिकैः शकुन्तलाविषयकदुष्यन्तनिष्ठरतेरास्वादस्ततो निर्वासनानामपि रसास्वादापत्तिः । अतः सामाजिकनिष्ठरतेरास्वादः स्वीकार्या इति द्वितीयम् । रसप्रतीते रंगरजतवदनिर्वचनीयत्वं विरुद्धम् । न हि रसप्रतीतिः कदापि बाधिता भवति । यद्यबाधस्तर्हि कथम निर्वचनीयत्वम् । इति तृतीयः । रसप्रतीते र्भ्रमत्वं प्रमाणरहितम् । भ्रमस्याऽऽनन्द-रूपता न प्रमाणसिद्धा रसास्वादश्चानन्दरूप इति चतुर्थः ।

**एतदाक्षेपनिराकरणम् :—**

पण्डितराजप्रकाशितस्य नूतनस्यास्य मतस्य प्राचीनैर्मम्मटादिभिः कथं ग्रहणम् ? रसगंगाधरसदृशनूतनालङ्कारिकग्रन्थाभावेनास्य मतस्य कुत्र प्रचारः स्यात् ? इति प्रथम आक्षेप आक्षिप्तः । निर्वासनानां न रसास्वादप्रसंगः । तेषु भावनाविशेष-दोषस्यैवानुत्पादेन तन्निबन्धनदुष्यन्ताद्य-भेद-बुद्धेरनुत्पत्तेः । तादृशदोषस्य कारणं सहृदयता । सा च वासना । तदभावे सहृदयत्वमेव तेषां न । ग्रन्थकृता तस्य सहृदयतोल्लासितत्वमुक्तम् । इति द्वितीयः । शकुन्तलाविषयकरतेः कथंचित् सामाजिकान्तःकरणसम्बन्धस्य साधारण्यसम्पादनद्वारा सम्पत्तेरपि विभावादीनां सामाजिकान्तः-करणेषु स्वप्नतुरंगवदनिर्वचनीयोत्पत्तिं स्वीकृत्य एव साक्षात्कारः सम्पादितः । रंग-रजतादीनां वस्तुतो बाधेऽपि न क्वचित् तत्प्रतीतेर्बाधः । अतएव

'रंगे रजतं स्वप्ने तुरगश्च मया दृष्टम्' इति संवित्तिः चाकचिक्यादिदोषनिशा-नाशेऽप्युपपद्यते। एवं रसस्य अपि प्रतीतेर्न क्वचिद् बाधः। इति तृतीयः। विभा-वादिसंवलितस्थायिप्रीतिराचार्यमते रसप्रतीतिः। अतो भ्रमत्वं तस्यास्तेषामपि मते। भ्रमस्यानन्दरूपत्वेऽनुक्तेऽपि न हि प्रमाया आनन्दरूपत्वं केनचित् क्वचित् प्रोक्तम्। ज्ञानमानन्द इत्येव सिद्धान्तः। भ्रमत्वस्यापि आनन्द-रूपत्वं लोकसिद्धम्। रंगे रजतं विलोक्य प्रथममानन्दत्येव दरिद्रः। अतस्तदाहरणाय प्रवर्तते। भ्रमत्ववृत्तौ प्रमात्मिकायां वृत्तौ चैकमेवाऽऽनन्दस्वरूपं स्वप्रकाशं चैतन्यमभिव्यज्यते। अतोऽत्र मते भ्रमरूपस्यापि रसस्यानन्दरूपताऽव्याहता। इति चतुर्थः।[१]

**षष्ठमते रसः—**

संयोगो ज्ञानम्। निष्पत्तिर्ज्ञानविशेषात्मनो रसस्य उत्पत्तिः। अत्र मते व्यञ्ज-नाया अनिर्वचनीयताख्यातेश्च अस्वीकारेऽपि पूर्वोक्त-भावना-विशेषरूपदोषस्य महिम्ना सहृदये "दुष्यन्तोऽहं शकुन्तलाविषयरकरतिमान्" इत्याकारो मानसो बोध उत्पद्यते। स एव रसः न तु स्थायी। एवं तादृशदोषमहिमजन्यत्वेन तादृशस्य बोधस्य भ्रमत्वं सिद्धम्। अनिर्वचनीयताख्यातेरनङ्गीकारेणाऽस्मिन्मते तादृशबो-धस्य भ्रमत्वं कथमिति निश्चेतुं न शक्यते। पञ्च ख्यातयः प्रसिद्धाः।[२] दोषमहिम्ना भ्रमोपपादनाय दार्शनिकैरेताः पञ्च ख्यातयः स्वीकृताः। विज्ञानवादिनां बौद्धानामा-त्मख्यातिः। ख्यातिशब्देन सर्वत्र ज्ञानस्य ग्रहणम्। विज्ञानवादिनामेषां मते बाह्यानां घटपटादिपदार्थानामसत्त्वम्। अपितु विज्ञानमेव घटरूपेण प्रतीयते। शून्यातवा-दिनां तेषामसत्ख्यातिः। एषां मते विज्ञानस्याप्यसत्त्वेन असतः शून्यस्य वाख्याति-र्ज्ञानं भ्रम इति यावत्। अख्यातिः मीमांसकानां मते। तेषां मते भ्रमज्ञानस्याऽसत्त्वम्। शुक्तौ रजतभानस्थले शुक्तेर्ज्ञानं प्रत्यक्षं रजतस्य च चाक-चिक्य-दर्शन-बलेन स्मरणम्। अत उभयोर्ज्ञानस्य प्रमात्कत्वमेव। अन्यथाख्याति नैयायिकानां मते। यथा रोगविशेषवशेन पीतत्वप्रतीतिरन्यथाख्यातिः। यथा वा रज्जौ सर्प-प्रतीतिः। शंखादीनामन्यथाभानमेवाऽन्यथाख्यातिः। अनिर्वचनीय-ख्याति वेदान्तिनाम्। स्वप्नदृष्टानां तुरगादीनां स्वप्नकाले सत्त्वेन 'असन्तः' इति

---

१. रस चं० यु० र० गं०, ८५, पृ०

२. आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।
तथानिर्वचनीयख्यातिरित्येतत् ख्यातिपंचकम्।
—त० भा० त० र० दी० भाषाटीका, पृ० २२८।

वक्तुमशक्यतया पश्चाद् बाधेन 'सन्तः'इति वक्तुमशक्यतया च सदसद्विलक्षण-रूपानिर्वचनीय-ख्यातिः।

अस्मिन् मते सहृदयात्मनि दोषविशेष-जन्यस्य शकुन्तलाविषयकरतिमद्दुष्य-न्ताभेदबोधस्य भ्रमत्वोपपादनमन्यथाख्यात्याऽऽत्मख्यात्या वा सम्भवति। सहृद-यस्य दुष्यन्तत्वेन भानमन्यथाख्यातिः। यथा शंखस्य पीतत्वेन भानम्। अथवा सहृदये विज्ञानस्यैव तादृश-दुष्यन्तत्वेन भानादात्मख्यतिरित्यलमप्रकृतप्रसंगेन।

स्वप्नादिजन्यो बोधो न काव्यार्थचिन्तन-जन्मा। अतो न तत्र रसः। एतादृशो-बोधो न विषयसाक्षेपः। भ्रमत्वात्। रसविषयकत्वव्यवहारो रत्यादिविषयकत्वाल-म्बनः। स्थायिन आस्वादस्यैव रसत्वेन तादृशव्यवहारः स्थायिभावे रसत्वमुपचर्यं उपपाद्यते। एवं सहृदये दुष्यन्तविशेषणशकुन्तलादिविषयक-रतिवैशिष्ट्यावगाहि, शकुन्तलादिविषयकरतिविशिष्टदुष्यन्ताभेदावगाहि, दुष्यन्तशकुन्तलादिविषयक रतिद्वय वैशिष्ट्यावगाहि वा त्रिविधं ज्ञानं रसः। व्यञ्जनानंगीकारेण रत्यादेः शब्दा-दप्रतीतेस्तज्ज्ञानाय चेष्टादि-लिंगकस्य ज्ञानस्य स्वीकारः।

**सप्तममते रसः—**

संयोगः समुदायः निष्पत्ती रसपदव्यवहारः। सूत्रे स्थायिपदानुपादानादेतस्य-मतस्योल्लासः। काव्य-समर्पिता विभावादयः समुदिता ज्ञान-द्वारा सहृदयहृदयं प्रविष्टा भावनया चिद्गतावरणे भग्ने साक्षिणा प्रमात्रा विषयी क्रियमाणा रसः। साक्षिसम्बन्ध एवात्रास्वादः। विभावादीनामन्तः करणधर्मत्वञ्च प्रागुक्त-स्वप्नतुरंग-रंग-रजतादिवत्।

**अष्टममते रसः—**

सम्यग्योगः संयोगश्चमत्कार इति यावत्। काव्यप्रतिपादितेषु विभावादिषु यश्चमत्कारी स एव रसः। एषां भावनैव स्थायिनं रसपदवीं प्रापयति। अतः प्रथममुपस्थितानामेषामुपेक्षाऽयुक्तेति त एव चमत्कारिणो रसपदव्यवहार्याः।

**नवममते रसः—**

भाव्यमानो विभाव एव रसः। भावनाविरामे न रसोद्बोधः। "सुप्ता किन्नु मृता" इत्यादौ भावनावशाद् विभाव एव तल्लीनता प्रतीयते। रसतां विना तत्र तल्लीनता नोपपद्यते। अतो विभाव एव तथा रसः।

**दशममते रसः—**

उद्बुद्धोऽपि स्थायी चेष्टादिकमन्तरा ज्ञातुं न शक्यते। चेष्टादिज्ञानं विना विभावस्य विभावताऽपि नोपपद्यते। चेष्टादिभावनायां विभावस्यापि विषयतया भानम्। न तु सर्वत्र विभावभावनायां चेष्टादिभानम्। अतो भाव्यमाना चेष्टा-दयोऽनुभावा एव रसः।

**एकादशमते रसः—**

व्यभिचारिण एव भाव्यमाना रसः। विभावता-स्थायिपोषणात्।

एवं प्रागुक्तानि अष्टौ मतानि भरतसूत्रानुकूलानि, अपराणि च न तथा। विभावादिषु प्रत्येकस्यानैकान्तित्वेन सूत्रे मिलितानां विभावादीनां निर्देशः।

**रसस्वरूपविषये तुलनाः—**

यद्यपि मम्मटेन पण्डितराजेन च 'इदं मन्मते रसस्वरूपम्' इति कण्ठतो न प्रोक्तं तथापि तयोर्ग्रन्थावलोकनेन रसस्वरूपविषये विचारः स्फुटीभवति। "व्यक्तः स तैर्विभावाद्यैः" इत्यत्र व्यक्तपदोपादानेन अभिनवगुप्तमते रससूत्र-व्याख्याया अन्ते "इत्याचार्याभिनवगुप्ताः" इति पदोपादानेन[1] च मम्मटस्य अभिनवगुप्तमते पक्षपातः प्रकटितो भवति। तथा च भग्नावरणचिद्-गोचरीक्रियमाणो रत्यादी रस इति मम्मटमतम्।

पण्डितराजः "रसो वै सः" इतिश्रुतिस्वारस्येन रत्याद्युपहितां भग्नावरणां चित-मेव रसं मन्यते। एतन्मते रत्यादीनां विशेषणत्वं चितश्च विशेष्यत्वम्।[2] मम्मटभिनवगुप्तादिसम्मतो विभावादिसाधारण्यसम्पादनविधिरपि पण्डितराज-स्यानभिप्रेत इति शङ्के। तथाहि मम्मटादिभि र्विभावादिसम्वलितस्य चित्-प्रकाश्य-मानस्य स्थायिनो रसत्वमङ्गीक्रियते। स च स्थायी सामाजिकनिष्ठः। विभावादीनां सामाजिकान्तः-करणसम्बन्धाभावे तदास्वादो नोपपद्यते। अतस्तै र्विभावादिसाधा-रण्याय भावनाविशेषस्य कल्पना क्रियते। तच्च साधारण्यं दोषविशेषकल्पनमन्तरा न सम्भवति। अतो दोषस्य कल्पनाऽवश्यं कार्या अन्यथा शकुन्तलात्वादिप्रकार-

---

१. पादा इति बहुवचनश्रीपदाचार्यपदैः स्वसम्मतत्वमुक्तम्। —का० प्र० बा० टी० पृ० ९५।

२. वस्तुतस्तु वक्ष्यमाणश्रुतिस्वारस्येन भग्नावरणा चिदेव रसः। —र० गं०, पृ० ९७।

शकुन्तलादिविशेष्यक-बोधजनकैः शब्दैः प्रतिपादितानां शकुन्तलादीनां साधारणी-करणं न स्यात्। एवं सहृदयता-वशोद्भूत-भावना-विशेषरूपदोषस्य महिम्ना कल्पितदुष्यन्तत्वादिना समाच्छादिते सहृदयात्मनि शकुन्तलादिविषयकदुष्यन्तादि-रतेरेवा स्वादः, न तु सहृदय-निष्ठरतेः। इत्थं नव्यमत-प्रतिपादनावसरे पण्डितराज आह। नव्यमतस्य न कुत्राप्युल्लेखः। अस्य पण्डितराज-कल्पितत्वात्। एवं काव्य-नाट्य-प्रकाशितै र्विभावादिभि र्व्यञ्जनया गृहीत-शकुन्तलादिविषयक-दुष्यन्तादि-निष्ठरत्यादिभावे
सहृदयताजन्यभावनाविशेष-रूपदोष-जन्य-कल्पितदुष्यन्तत्वादि- समाच्छादिता-त्मनि सामाजिके समुत्पद्यमानेन शुक्तौ रजतवदनिर्वचनीयेन दुष्यन्तादिनिष्ठरत्या-दिनोपहिता भग्नावरणा चिदेव रसः पण्डितराजस्येति प्रतीमः। मम्मटस्य च सामाजिकनिष्ठो तादृशो रत्यादी रसः।

**रसभेदादिविषयेतुलनाः—**

रसो नवधा। श्रृंगार-करुण-शान्त-रौद्र-वीराद्भुत-हास्य-भयानक-बीभत्स-भेदात्। तत्राद्यः श्रृंगारो द्विधा। संभोगो विप्रलम्भश्च। आद्यः परस्परालिंगनाधरपानपरिचुम्बनादिभेदैरनन्तभेदः। द्वितीयश्चाभिलाषविरहेर्ष्या-प्रवास-शापहेतु-कत्वेन पञ्चविधः। यत्र अनुकूलौ विलासिनौ दर्शनस्पर्शादीनि निषे-वेते तत्र सम्भोगश्रृङ्गारः, यत्र च रतेः प्रकर्षगामित्वेऽपि नाभीष्टलाभस्तत्र विप्रलम्भः।[१] इति श्रृङ्गारभेद-विषये मम्मटाशयः।

संयोगो विप्रलम्भश्चेति द्विविधः श्रृङ्गारः। संयोगकालावच्छिन्ना रतिः संयोगः। वियोगकालावच्छिन्ना सा च विप्रलम्भः। नायकयोरेकदेशकालस्थितत्वं तदसत्त्वं च न संयोगो विप्रलम्भो वा। ईर्ष्यादिसद्भाव एकशयनस्थयोरपि नायक-योर्विप्रलम्भस्य वर्णनात्। अतः "अहं संयुक्तो वियुक्तश्चे" त्याकारावन्तः-करण-वृत्तिविशेषौ संयोगवियोगपदवाच्यौ। प्रवासादिभि-रुपाधिभि र्विप्रलम्भस्य पञ्चधात्व-प्रतिपादनमयुक्तम्। प्रवासादीनां परस्परं वैलक्षण्यस्यानुपलम्भात्। इति पण्डितराजमतनिष्कर्षः।

---

१. अनुकूलो निषेवेते यत्रान्योन्यं विलासिनौ।
दर्शनस्पर्शनादीनि स संभोगो मुदान्वितः॥
"भावो यदा रतिर्नाम प्रकर्षमधिगच्छति।
नाधिगच्छति चाभीष्टं विप्रलम्भस्तदोच्यते॥" —का० प्रदी० ७५ पृ०।

सर्वत्र वियुक्तत्व प्रकारक-बुद्धेः सत्त्वेऽपि प्रवासादिकारणानां भिन्नत्वेन तत्प्र-युक्तो भेदो वियोगेऽपि स्वीकार्यः । कारण-भेदो विरुद्धधर्माध्यासश्च भेदहेतू । कारण-भेदेऽपि एकत्वकथनमयुक्तम् । अतो पण्डितराजकथनं विशेषानुपलम्भरूपं नोचितमिति रसगंगाधरचन्द्रिकाकारः ।

मम्मटेन वीररसस्य भेद एक एव उदाहृतः । तस्य भेदा नोक्ताः । पण्डितराजश्चाह वीरस्य चतुर्धात्वम् । दान-दया-युद्ध-धर्मैस्तस्य चतुर्विधत्वात् । इत्थं प्राचामनुरोधेन वीरस्य चतुर्विधत्वमुक्तम् । मूले "प्राचाम्" इति कथनेन प्रतीयते यन्मम्टस्यापि वीरस्य चतुर्विधत्वं सम्मतमेव । पण्डितराजोऽग्रे अस्य रसस्य श्रृङ्गारवदनन्तभेदतां प्रतिपादयामास ।[१] अन्ये च कतिचित् क्षमासत्य-पाण्डित्यादयो वीरभेदा रसगङ्गाधरे प्रदर्शिताः ।

मम्मटेनाद्भुतरसध्वनौ " चित्रं महानेष बतावतारः" इत्यादि पद्यमुदाहृतम् । अत्र वामनालम्बनस्तल्लोकोत्तरप्रभावदर्शनोद्दीपितः, नयनविस्फारदिभिरनुभावैरनु-भावितो धृति-हर्षादिभिश्च सञ्चारितो विस्मयो बलिनिष्ठः प्रधानतयाऽभिव्यज्यत इति तदीयाशयः । भगवद्विषयां बलि-निष्ठां रतिं प्रति विस्मयस्य गुणीभूतत्वेनास्य पद्यस्याद्भुतध्वनित्वेनोदाहरणमसंगतम् । यथा "पश्यामि देवांस्तव देव देहे" इत्यादौ गीतापद्ये पार्थनिष्ठा भगवदालाम्बना विस्मयोपस्कृता भक्ति-पदवाच्या रतिरेव प्रधानम् । इति पण्डितराजस्याभिप्रायः ।

अन्यत्र रसविषये प्रायः समान एव सिद्धान्त उभयोः । पण्डितराजो रसध्वनेरपि संलक्ष्यक्रमत्वं ब्रवीतिति विषयेऽग्रे स्फुटीभविष्यति विचारः । एवं रसविषये यथा-मति यथोपलब्धि तुलनाकृता । अत्र विपश्चितो विचारयन्तु ।

**ध्वनि-विषये तुलना :—**

ध्वनिशब्दस्य पञ्चाऽर्थाः—शब्दोऽर्थो व्यङ्ग्यो व्यञ्जना काव्यविशेषश्च । ध्वनति, ध्वन्यते, ध्वन्यतेऽस्मिन्निति ध्वनिपदव्युत्पत्तेः ।[२] अत्र ध्वनिपदेन प्रागुक्तस्य

---

१. वस्तुतस्तु बहवो वीरस्य श्रृङ्गारस्येव प्रकारा निरूपयितुं शक्यन्ते । —र० गं०, १७५ पृ० ।

२. अर्थो वा शब्दो वा व्यापारो वा । अर्थोऽपि वाच्यो वा ध्वनतीति, शब्दोऽप्येवम् । व्यङ्ग्यो ध्वन्यत इति व्यापारो वा शब्दार्थयोर्ध्वननम् । ध्व० लो० लो० १०४,५ पृ० । तद्योगात् समस्तमपि काव्यं ध्वनिः । —तत्रैव, १४१ पृ० ।

मम्मट-मत उत्तमस्य रसगंगाधरमत उत्तमोत्तमस्य काव्यस्य ग्रहणम् । ध्वनिः प्रथमं द्विधा । अविवक्षितवाच्य-विवक्षितान्यपरवाच्यरूप-भेदाभ्याम् । आद्यो लक्षणा-मूलोऽपरश्चाभिधामूलः । आद्ये मुख्यार्थस्य बाधितत्वेन अविवक्षितत्वम् । चरमे तस्य विवक्षितत्वेऽपि व्यङ्ग्यनिष्ठत्वम् । आद्ये वाच्यस्य क्वचिदर्थान्तरसंक्रमितत्वं क्वचिदत्यन्ततिरस्कृतत्वम् । अतः सोऽपि द्विधा । अर्थान्तरसंक्रमितवाच्या-त्यन्त-तिरस्कृत-वाच्यरूप-भेदद्वयात् । आद्ये उपादानलक्षणाऽन्यत्र च लक्षणलक्षणा । अतएव तयोः क्रमशो वाच्ययोः संक्रमितत्वं तिरस्कृतत्वम् ।

विवक्षितान्यपरवाच्यो ध्वनिरपि द्विधा । अलक्ष्यक्रमव्यंग्यलक्ष्यक्रमव्यंग्यरू-पभेदद्वयात् । अलक्ष्यो लाघवाल्लक्षयितुमशक्यः शतपत्र-शतपत्रभेदवद् वाच्यार्थ-व्यंग्यार्थ-प्रतीत्योः पौर्वापर्यरूपो विद्यमानः क्रमो यत्र स ध्वनिरलक्ष्यक्रमव्यंग्यः । अयमष्टधा । रस-भाव-रसाभास-भावाभास-भावशान्ति-भावोदय-भावसन्धि-भावशबलताभेदैः । रसस्वरूपमुक्तम् । भावो गुरुपुत्रादिविषया रतिरञ्जितो व्यभि-चारी च । अनुचितालम्बनोऽनौचित्यप्रवर्तितो वा रसो रसाभासः । तथाविधो भावो भावाभासः । भावस्योदयो भावोदयः । भावसन्धिः द्वयोर्भावयोः प्राधान्येनोप-स्थितिः । भावस्य प्रशमे भावशान्तिः । भावानामुपमर्द्योपमर्दकभावेनाऽन्यथा वाऽवस्थानं भावशबलता । रसादीनामनन्तभेद-सम्भवेन तेषां भेदानां च गणनायाः कर्तुमशक्यत्वेनैक एवालक्ष्यक्रमव्यंग्यनामा ध्वनिरङ्गीक्रियते ।[१]

यत्र वाच्य-व्यंग्यप्रतीत्योः पौर्वापर्यरूपः क्रमः शब्दप्रतिशब्दवल्लक्ष्यस्तत्र लक्ष्यक्रम-व्यंग्यो ध्वनिः । अयं त्रिधा । शब्दशक्त्युद्‌भवः, अर्थशक्त्युद्‌भवः शब्दा-र्थोभयशक्त्युद्‌भवश्च । आद्यो द्विधा वस्तुरूपोऽलंकाररूपश्च । यत्र वस्तुमात्रं व्यंग्यं तत्राद्यः । अलंकारस्य व्यंग्यत्वे च द्वितीयः । व्यंग्यालंकाराणामलंकार्यत्वेऽपि ब्राह्मणश्रमणन्यायेनालंकारपदेन व्यवहारः । शब्दार्थशक्त्युद्‌भवो द्वादशधा । त-थाहि-व्यञ्जकोर्थः षोढा—

१. स्वतः-सम्भविवस्तुरूपः ।

२. स्वतः-सम्भवी अलंकाररूपः ।

३. कविप्रौढोक्ति-सिद्धो वस्तुरूपः ।

४. कविप्रौढौक्तिसिद्धालंकाररूपः ।

---

१. रसादीनामनन्तत्वाद्‌भेद एको हि गण्यते । का० प्र० ४ उ० सूत्रम्, ५७

५. कविनिबद्ध-वक्तृ-प्रौढोक्ति-सिद्धो वस्तुरूपः ।

६. कविनिबद्ध-वक्तृ-प्रौढोक्ति-सिद्धोऽलंकाररूपः ।

एवमेकेन व्यज्जकेनार्थेन वस्त्वलंकाररूपस्यार्थस्यध्वननम् । अतः षण्णां व्यञ्जकानां द्वादश व्यङ्ग्या अर्थाः । अतोऽयं ध्वनि र्द्वादशधा । यथा—

१. स्वतः सम्भवि-वस्तुव्यंग्यवस्तुरूपः

२. " " " " अलंकाररूपः ।

३. स्वतः सम्भव्यलंकार-व्यंग्यवस्तुरूपः ।

४. " " " अलंकाररूपः ।

५. कवि-प्रौढोक्तिसिद्ध-वस्तु व्यंग्यवस्तुरूपः ।

६. " " " " अलंकाररूपः ।

७. " " अलंकार व्यंग्यवस्तुरूपः ।

८. " " " अलंकाररूपः ।

९. कविनिबद्धवक्तृ प्रौढोक्तिसिद्धालंकारव्यंग्यवस्तुरूपः ।

१०. " " " वस्तुव्यंग्यालंकाररूपः ।

११. कविनिबद्धवक्तृ प्रौढोक्तिसिद्धालंकारव्यंग्यवस्तुरूपः ।

१२. कविनिबद्ध-वक्तृ प्रौढोक्ति-सिद्धालंकार-व्यंग्यालंकाररूपः ।

तृतीयः शब्दार्थशक्त्युद्भवश्चैकविध एवं संकलनेन ध्वनेरष्टादश भेदाः—

विवक्षितान्यपरवाच्यः १६

अविवक्षितवाच्यः ०२

१८

एषु ध्वनिषु अर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृत-वाच्यौ शब्दशक्त्युद्भवौ वस्त्वलंकाररूपौ च ध्वनयः पदवाक्यगता भवन्ति । अतस्ते प्रत्येकं द्विभेदाः । अत एषामष्टौ भेदाः । अर्थशक्त्युद्भवश्च द्वादशविधो ध्वनिः पद-वाक्य-प्रबन्ध-प्रकाश्यः । अतः तस्य षट्त्रिंशद् भेदाः । शब्दार्थशक्त्युद्भव एक एव अलक्ष्यक्रमश्च पद-पदैकदेश-वाक्यवर्ण-रचना-प्रबन्ध-प्रकाश्यत्वेन षोढा । एवं संयोजने एकपञ्चाशच्छुद्धध्वनिभेदाः । एषां स्वकीयैः सजातीयै र्विजातीयैश्च भेदैरङ्गाङ्गिभाव-

सन्देहैकवाचक प्रवेशरूपेण त्रिविधेन संकरेण एकरूपया संसृष्ट्या च "नीरक्षीर-न्यायेन" तिलतण्डुलन्यायेन च योगे सत्येकेस्य ध्वनि-भेदस्य एकपञ्चाशद् भेदा भवन्ति। एवं प्रत्येकस्य तथा। एवमेकपञ्चाशता एकपञ्चाशतो गुणनेनागतस्य गुणनफलस्य पुश्चतुर्भिर्गुणने (५२ ५१४- १०४०४) चतुरधिकचतु:-शतोत्तरदश-सहस्रभेदा: संकीर्णा भवन्ति। शुद्ध ध्वनिभि: सह योगे ध्वने: १०४५५ भेदा भवन्ति। इति काव्यप्रकाशकारस्य ध्वनिभेद-निरूपणाशय:।

रसगंगाधरे ध्वने: कतिपये मुख्यभेदा: प्रदर्शिता:। तत्र प्रायो ममटानुसारेणैव ध्वनिविवेचनम्। केषांचिद् ध्वनिभेदानां च विषये पार्थक्यमवलोक्यते। तत्र विचारयिष्यते। तत्रेत्थं ध्वनि-निरूपणम्—

ध्वनिर्द्विधा। अभिधामूलो लक्षणामूलश्च। आद्यस्त्रिधा। रसवस्त्वलंकार-ध्वनिभेदात्। द्वितीयस्य अर्थान्तरसंक्रमितवाच्यात्यन्ततिरस्कृतवाच्याख्यौ भेदौ। एवं संकलनया ध्वने: पञ्च मुख्यभेदा:। रसध्वनिर्द्विधा। असंलक्ष्यक्रमो लक्ष्यक्रमश्च। रसपदेनात्र भावादीनामपिग्रहणम्। तेन भावादीनामपि अलक्ष्यलक्ष्यक्रमत्वं ज्ञेयम्। प्रकरणादगौ स्फुटे झटिति प्रतीयमानैर्विभावादिभिर्यत्र रत्यादीनां व्यंग्यत्वं तत्र पौर्वापर्यरूपस्य विभावादि-रत्यादिप्रतीत्यो: क्रमस्य सहृदयतमेन प्रमात्राऽलक्षणाद् अलक्ष्यक्रमा रसादय:। यत्र च प्रकरणदीनां विभावादिप्रतिपादकानां न स्फुटत्वम्, अत: प्रकरणादिशात्त उन्नेया विभावादयस्तत्र सामग्रीविलम्बाधीनेन चमत्कृतिमान्थर्येण तादृशविभावादिव्यंग्यरत्यादि-स्थले संलक्ष्य-क्रमो ध्वनि:। यथा—

"तत्पगतापि च सुतनु: श्वासासङ्गं न या सेहे।
सम्प्रति सा हृदयगतं प्रियपाणिं मन्दमाक्षिपति"

इति पद्ये 'सम्प्रति' पदार्थस्य "पूर्वं तस्या नववधूत्वे अपि अन्यैव संकोचस्थितिरासीत्, अधुना तु संकोचस्यापि क्रमिक: संकोच:" इत्यात्मनो ज्ञानस्य विलम्बेन रतिरूपस्य स्थायिन: प्रतीतौ विलम्ब:। अत: क्रमस्य लक्ष्यतया संलक्ष्यक्रमत्वम्।

न च रसादीनामलक्ष्य क्रमत्वमेवेति वाच्यम्। तथात्वे मानाभावात्। आनन्दवर्धनेनापि—

"एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती"

इति कुम्मारसम्भवपद्ये व्रीडाया व्यभिचारिण्याः संलक्ष्यक्रमत्वमुक्तम्। अत्र व्रीडाव्यञ्जक-लीलाकमलपत्रगणनरूपानुभावस्य विलम्बेन प्रतीतिः। प्रकरणज्ञाने सत्येव तस्य-तद्व्यञ्जकत्वात्। तथाहि-"एवं वादिनि" इत्यादि पद्यं कुमारसम्भव आगतम्। पार्वत्याः कठिनेन तपसा तुष्टः शिवस्तया सह स्वविवाहार्थं वार्ताकरणाय देवर्षिंम् प्रेषयामास। हिमालयसमक्षं तेन शिवस्य संदेशो निगदितः। तदानीं तत्र पार्वत्यासीत्। स्वविवाहवार्तामाकर्ण्यपतुः पार्श्वे उपस्थिता अधोमुखी पार्वती लीलाकमलपत्राणि गणयामास। एतद्धिप्रकरणं यो न वेत्ति तस्य व्रीडाप्रतीतिर्नभवितुमर्हति। अधोमुखत्वविशिष्ट-लीलाकमल-पत्रगणनस्य कुमारीस्वाभाव्येन संम्भवात्तदभिव्यक्तौ मानाभावात्। नारदकृतविवाहादि-प्रसंग-विज्ञानोत्तरमधोमुखत्वविशिष्ट-लीला-कमलपत्रगणनस्य व्रीडाव्यञ्जकता। अत्र विभावानुभावज्ञान विलम्बे प्रसंगविज्ञानाभावः प्रकरणापर्यालोचनं वा कारणम्। अतो व्रीडारूपभावस्य चमत्कारिणः संलक्ष्यक्रमत्वम्। "रसभावादिरर्थों ध्वन्यमान एव, न वाच्यः। तथा न सर्वोऽलक्ष्यक्रमस्य विषयः" इति चाभिनवगुप्तपादाचार्योक्तिः।

न च रसादिध्वनेरपि संलक्ष्यक्रमत्वे "अर्थशक्तिमूलस्य द्वादश भेदाः" इत्यभिनवगुप्तोक्तेः "तेनायं द्वादशात्मकः" इति मम्मटोक्तेश्च विरोधः, स्वतःसम्भवित्व-कवि-प्रौढोक्तिसिद्धत्व-कविसिद्धवक्तृ-प्रौढोक्तिसिद्धत्वरूपैस्त्रिभिरुपाधिभिः षड्भिर्वस्त्वलंकाररूपै र्व्यंञ्जकै रसादीनामपि व्यञ्जनादष्टादशत्वप्रसंगादिति वाच्यम्। तयोर्मते प्रकटैर्विभावादिभिरलक्ष्यक्रमतयैव व्यज्यमानस्य स्थायिनः झगिति समुत्पद्यमानालौकिक-चमत्कारविषय-स्थायित्वस्य च रसस्य भावस्य च स्वीकारेण संलक्ष्यक्रमतया व्यज्यमानानां रत्यादीनां तादृशचमत्कारजनकत्वाभावेन वस्तुमात्राताया एव स्वीकारात्। न चाभिनवगुप्तमते संलक्ष्यक्रमतया व्यज्यमानानां रत्यादीनां वस्तुमात्रत्वे स्वीकृते "रसभावादिरर्थो ध्वन्यमान एव, न वाच्यः। तथापि न सर्वोऽलक्ष्यक्रमस्य विषयः" इति तदुक्तेर्विरोधः। अत्रत्यरसभावपदयो रत्यादिपरत्वात्। इति पण्डितराजस्याशयः।

गुरुमर्मप्रकाशकृता रसादीनां संलक्ष्यक्रमत्वं खण्डितम्। साहित्यदर्पणादौ रसस्य वेद्यान्तरसंस्पर्शशून्यत्वं प्रतिपादितम्। रसास्वादकाले सहृदयानां न वेद्यान्तरस्य ज्ञानम्। वेद्यान्तरसंस्पर्शशून्यत्वं तदैवोपपद्यते यदा विभावादिप्रतीते रसप्रतीतेश्च यः सूक्ष्मकाल-व्यवधानरूपः क्रमः तस्यालक्ष्यत्वम्। तस्य लक्ष्यत्वे च तन्नोपपद्यते। अतोऽलक्ष्यक्रमत्वमेव रसादीनाम्। प्रकरणादिज्ञान-विभावादिज्ञा-

नयो: क्रममादाय न लक्ष्यालक्ष्यक्रमत्वव्यवहार: । अपितु विभावादि-स्थायिनो: प्रतीत्यो: क्रमस्य लक्ष्यालक्ष्यत्वे आदाय स: । प्रकरणादिज्ञानसहितस्यैव विभावादे: स्थायिव्यञ्जकत्वम् । एवं तल्पगतापि च सुतनु: "इत्यादौ प्रकरणज्ञानसहितस्यैव व्यञ्जकत्वेन व्यंग्य-व्यञ्जकयो: क्रमोऽ लक्ष्य एव । नहि विभावादि-प्रतीतिरहित-यत्किञ्चिदर्थमात्र-प्रतीतौ विगलित-वेद्यान्तरता सहृदयसम्मता ।"[१]

'तथापि न सर्वोऽलक्ष्यक्रमस्य विषय:' इत्यभिनवगुप्तोक्तेरयमाशय:-विभावादिभिन्नवाच्यार्थज्ञानस्य रसादिज्ञानस्य च क्रम: क्वचिल्लक्ष्यत इति । यस्य कस्यचित् क्रमस्य ज्ञाने विगलित-वेद्यान्तरता तत्र नोपपद्यत इति कल्पनमयुक्तम् । सहृदयानु-भवविरुद्धत्वात् । अपितु विभावादि ज्ञानतज्जन्यरसादिज्ञानयो: क्रमस्य वेद्यत्व एव विगलित-वेद्यान्तरताऽभाव: ।

"एवं वादिनि" इत्यादौ पर्यन्ते रस एवाऽलक्ष्यक्रम: प्रतीयते । तमादायात्रालक्ष्यक्रमत्वमेव । व्रीडामादाय च लक्ष्यक्रमत्वम् ।[२] वस्तुतस्त्वत्र रसस्यैव प्राधान्यम् । विभावानुभावव्यभिचारिण: समुदिता रसव्यञ्जका: । विभावोऽत्रप्रकरणगम्य: । अनुभावोऽपि तथा । अधोमुखत्वेन लज्जाया लीलाकमलपत्रगणनेन च तदाकारगुप्तिरूप-स्यावहित्थस्य व्यभिचारिण: प्रतीति: । तत्पश्चात् स्थायी प्रतीयते । एवं रसव्यञ्जकव्यभिचारिज्ञान एव विलम्ब: । तदुत्तरं तु विगलित-वेद्यान्तरतापात: । न चात्र व्यभिचारिणमादाय भावध्वनित्वमिति वाच्यम्, संलक्ष्य-क्रमतया व्यङ्ग्यत्वेन तस्य वस्तुमात्रत्वात् । अत एव "एवं जादिनि" इत्यादि पद्यात् प्राक्—

"अर्थशक्त्युद्भवस्त्वन्यो
यत्रार्थ: सम्प्रकाशते ।
यस्तात्पर्येण वस्त्वन्यद्
व्यनक्त्युक्तिं विना यत: ॥"[३]

१. गु० म० प्र० पृ० १३२ ।

२. रसस्त्वत्रापि दूरत एव व्यभिचारिस्वरूपे पर्यालोच्यमाने भातीति तदपेक्षयाऽलक्ष्यक्रमतैवा लज्जापेक्षया तु तत्र लक्ष्यक्रमत्वम् । अमुमेव भावमेवं शब्द: कवल शब्दश्च सूचयति ।—ध्व० लो० लो० २७० पृ०

३. ध्व० लो० उ० २,२२ कारिका ।

इतिकारिकायां वस्तु-पदमुपात्तम् । एवं व्यभिचारिणमादाय वस्तुध्वनित्वं कथं चिद् वक्तुं शक्यते, न तु भावध्वनित्वम् । न चैवं स्वीकृते—

"न चायमलक्ष्यक्रमव्य-ङ्ग्यस्यैव ध्वनेर्विषयः । यतो यत्र साक्षाच्छब्दनिवेदितेभ्यो विभावानुभावव्यभिचारिभ्यो रसादीनां प्रतीतिः स तस्य केवलस्य विषयः" इति ध्वनिग्रन्थविरोध इति वाच्यम् । अयं "एवं वादिनि" इत्यादि श्लोकः अलक्ष्यक्रम व्यङ्ग्यस्यैव न विषयः, अपितु लज्जारूपं व्यभिचारिणं वस्तुमात्रमादाय संलक्ष्यक्रमस्यापि विषयः । यत्र च साक्षाच्छब्दैर्निवेदितेभ्यो विभावादिभ्यो रसादिप्रतीतिः सोऽसंलक्ष्यक्रमव्यङ्ग्यस्यैव विषयः, न संलक्ष्यक्रमव्यङ्ग्यस्यापि । यथा कुमारसम्भवे मधु-प्रसंगे । इति तद्-ग्रन्थतात्पर्यस्य वर्णनात् । अर्थशक्तिमूलवस्तु ध्वनेर्विषय "एवं वादिनि" इत्यादि श्लोको भवतु इति त्वन्यत् । पार्यन्तिक रसध्वनित्वमादाय लक्ष्यक्रमव्य ङ्ग्यध्वनेरयं श्लोको विषयः । अतोत्रार्थशक्तिमूलसंलक्ष्यक्रम-वस्तु-रसरूपासंलक्ष्यक्रमध्वन्योरंगाङ्गिभावरूपः संकरः । "इह तु सामर्थ्याक्षिप्त-व्यभिचारिमुखेन रसप्रतीतिः" इति वदता ग्रन्थकृता रसध्वनित्वमप्युक्तम् । अतएव—

"रसभावतदाभास-

तत्रशान्त्यादिरक्रमः" इति रसादीनामक्रमत्वोक्तिः सङ्गच्छते । न चैतत्कारिका स्थेन

"लक्ष्यक्रमत्वमपि हि तस्य कदाचित् भवति तदा चार्थशक्त्युद्भवानुस्वानरूपभेदतेति वक्ष्यते" इति लोचनग्रन्थेन विरोध इति वाच्यम् । विभावादिप्रतीतिजनकविभावादि-प्रतीत्योः क्रममादाय औपचारिकस्य रसादीनां संलक्ष्यक्रमत्वस्योपपादनात् । नहि क्वचिदपि विभावादि-रसादि प्रतीत्योः क्रमस्य लक्ष्यत्वमिति प्रागुक्तम् ।

रसादीनां लक्ष्यक्रमत्वोपपादने पण्डितराजस्य स्ववचनविरोधो लक्ष्यते । तथाहि रसादीनां लक्ष्यक्रमत्वस्वीकारे "रसभावादिरर्थो ध्वन्यमान एव, न वाच्यः । तथापि न सर्वो लक्ष्यक्रमस्य विषयः" इत्यभिनवगुप्तोक्तिः प्रमाणत्वेनोपन्यस्यते । "अर्थशक्तिमूलस्य द्वादशभेदाः" इति तदुक्तिविरोधापनयनाय च तन्मते संलक्ष्यक्रमाणां रत्यादीनां वस्तुमात्रत्वमुच्यते । यदाभिनवगुप्तमते संलक्ष्यक्रमाणां तेषां वस्तुमात्रत्वं तर्हि प्रागुक्ततदुक्ते स्तेषां संलक्ष्यक्रमत्वे कथं प्रमाणत्वम् ।

रसगङ्गाधरभाषाटीकाकारा मदनमोहन झामहाभागाः पण्डितराजस्य रसादीनां संलक्ष्य-क्रमत्व-प्रतिपादन-प्रकरणे समागताम्—

"अत्र कुमारी-स्वाभाव्यादप्यधोमुखत्वविशिष्टस्य लीलाकमलपत्रगणनस्योपपत्त्या मनाग्विलम्बेन नारदकृत-विवाहादि-प्रसंग-विज्ञानोत्तरं व्रीडायाश्चमत्करणाल्लक्ष्यक्रमोऽयं ध्वनिरिति प्राहुरानन्दवर्धनाचार्याः"[1] इति पङ्क्तिं खण्डयन्ति। तद्बीजन्तु ध्वन्यालोके क्वचिदपि तस्या अनुपलम्भः। आनन्दवर्धन तात्पर्यवर्णनमेतस्यां पङ्क्तावित्यपि कथनमसङ्गतम्। "रसभावतदाभासभावशान्त्यादिरक्रमः" इत्यनेन रसादीनामक्रमत्वस्योक्तत्वेन तथा तात्पर्यवर्णने विरोधापत्तेः।

पण्डितराजस्य तादृशपङ्क्ति लेखनेऽभिनवगुप्तस्य "इह तु पद्मदलगणनमधोमुखत्वं चान्यथापि कुमारीणां सम्भाव्यत इति झटिति न लज्जायां चित्रयति हृदयम्, अपितु प्राग्वृत्ततपश्चर्यादिवृत्तान्तानु स्मरणेन तत्र प्रतिपत्तिं करोतीति क्रमव्यङ्ग्यतैव[2]" इति कथनमेव बीजमिति मदीयो विचारः।

पण्डितराजमते द्विविधस्य रसादिध्वनिप्रपञ्चस्य पदपदैकदेश-वाक्य-प्रबन्ध-प्रकाश्यत्वम्, न तु वर्ण-रचनाप्रकाश्यत्वमपि। वर्णरचनयोः गुणमात्रव्यञ्जकत्वात्। ननु गुणि-रसव्यञ्जनामन्तरा तयोर्गुणव्यञ्जकताऽनुपपन्ना, इति चेन्न, गुणि-व्यञ्जनमन्तरा गुणानभिव्यञ्जकत्वे सार्वत्रिकमानाभावात्। इन्द्रियत्रये गुणि-व्यञ्जनं विनापि गुणव्यञ्जकत्वस्य दर्शनात्। यथा रसनेन्द्रियं रसमेवाभिव्यनक्ति, न तु गुणि जलमपि, घ्राणेन्द्रियं गन्धमेव तथा, न तु पृथ्वीमपि। एवं श्रोत्रेन्द्रियं शब्दमेवाभिव्यनक्ति नत्वाकाशमपि। गुणिनां त्वचा चक्षुषाऽनुमानेन च ग्रहणम्। विभिन्नेन्द्रियाभिव्यक्तानां गुणि-गुणानां कदाचिद् विशेष्य-विशेषण-भावापन्नत्वेन "मधुरं जलम्" इत्यादिवत् क्वचिच्च "माधुर्यं जलञ्च" इत्यादिवच्च एकज्ञानगोचरत्वं समूहालम्बनात्मकज्ञान-विषयत्वञ्चौदासीन्येन। एवं वर्ण-रचना-पद-पदैक-देशादिव्यञ्जकोपस्थापितानां गुणानां रसानाञ्च अभिव्यक्तिविषयता। एवं वर्ण-रचनयो रसाभिव्यञ्जकता निरस्ता।

इत्थं रसादि ध्वनेरलक्ष्यक्रमलक्ष्यक्रमत्वाभ्यामुपाधिभ्यां द्विविधत्वम्। पुनश्चैकोऽलक्ष्य क्रमरूपो रसादिध्वनिः पद-पदैकदेश-वाक्य-प्रबन्ध-प्रकाश्यत्वरूपैश्चतुर्भिरूपाधिभिश्चतुर्धा। एवमपरोऽपि। अतः संकलनयाष्टविधः सः।

---

१. र० गं० ३९५ पृ०।

२. ध्व० लो० लो० २७० पृ०

संलक्ष्यक्रमध्वनेः शब्दशक्ति-मूलाऽर्थसक्तिमूलौ भेदौ। तत्राद्यो मम्मटमतवद् द्विधा। व्यङ्ग्यस्य वस्त्वलंकारात्मना। किन्तु शब्दशक्तिमूल ध्वनेः स्वरूपे ममम्ट-पण्डितराजयोर्मतं भिन्नम्। मम्मटमते नानार्थक शब्दस्थले पण्डित-राजमते च य़ोगरूढशब्दस्थले शब्दशक्तिमूलो ध्वनिरिति विचारयिष्यते शाब्द-व्यञ्जना स्वरूप—तुलनास्थले। रसगंगाधरमते अर्थशक्तिमूलस्य अष्टावेव भेदाः। कविनिबद्ध-वक्तृप्रौढोक्ति-सिद्ध-वस्त्वलङ्कारयो र्व्यंञ्जकयोरनङ्गीकारेण न तन्मूला-श्चत्वारो भेदाः। तदनङ्गीकारवीजन्तु कविप्रतिभानिर्वर्तितत्वस्य कविप्रौढोक्तिसि-द्धयोस्तन्निबद्धवक्तृप्रौढोक्तिसिद्धयोश्च व्यञ्जकयोर्वस्त्वलंकारयोरविशेषात्। कविप्रतिभानिर्वर्तितत्वस्यानुगमकस्यास्वीकारे कवि-निबद्ध-वक्तृ-निबद्धत्वादेर। पत्तेः। एवं भेदकल्पनेऽनवस्था स्यात्। अतः कविप्रतिभानिर्वर्तितत्वमेवानुगमकं स्वीकार्यम्।[१] न च प्रथमकविनिबद्धत्वस्य तत्रापि सत्त्वेन न निबद्धनिवद्धत्वापत्ति-रिति वाच्यम्। प्रथमे कविनिबद्धे लोकोत्तरवर्णनानिपुणकवित्वरूपस्य सत्त्वेन कवि-निबद्धत्व-कल्पनस्यानौचित्यात्। प्रतिभानिर्वर्तितत्वेन संग्रहं परित्यज्य वक्तृ-विशेषमन्तर्भाव्य भेदवर्णनमनुचितम्। कवि-निबद्धवक्तृत्वेन तन्निबद्ध-निबद्धवक्तुरनुगमे तु कवित्वेनैवानुगमो रुचिरः।

प्राचीनैर्मम्मटादिभिः स्वीकृतौ कविनिबद्ध-वक्तृ-प्रौढोक्तिसिद्धौ वस्त्वलङ्का-ररूपौ व्यञ्जकावर्थौ समर्थयन् नागेश आह—

"वृद्धोक्तिविषयाच्छिशूक्तिविषय इव कव्युक्तिविषयात् कविनिबद्धोक्ति-विषये चमत्काराधिक्यस्यानुभविकत्वात् पृथगुक्तिः। ततः परं च प्रणि-धानसाध्यक प्रंतीतिकतया चमत्कारस्थगनान्नोम्भितोम्भितादेः पृथग् गणणेति नव्याः।"[२]

पण्डितराजेन शब्दार्थोभयशक्तिमूलः संलक्ष्यक्रमध्वनेस्तृतीयो भेदो न स्वीकृत इति तर्कयामि। यद्यपि तेन परिवृत्तिसहिष्णुनां तदसहिष्णूनां च शब्दानां साम्यस्थले द्व्युत्थ ध्वनेश्चर्चा कृता, उदाहतं च "रम्यहासा रसोल्लासा" इत्यादिप-

---

१. प्रतिभानिर्वतितत्वाविशेषाच्च कवितदुम्भितवक्तृप्रौढोक्तिनिष्पन्नयोरर्थयोर्न पृथग्भावेन गणनोचिता। उम्भितोम्भितादेरपि भेदान्तरप्रयोजकतापत्तेः। न च तस्यापि कव्युम्भितत्वानपायत्तत्प्रयोज्य-भेदान्तर्गतत्वमेवेति वाच्यम्। प्रथमोम्भितस्यापि लोकोत्तरवर्णनानिपुणत्व-लक्षणकवित्वानपायात् पृथग्भेदप्रयोजकतानुपपत्तेः। —र० गं० चं० सं० हि० व्या०, द्वि० भा० २, ३, पृ०

२. गु० म० प्र० १३५ पृ०

द्यम्, तथापि प्राचीनमतेनैतद् इति मदीयो विचारः। नायं तृतीयोभेद स्तस्याभिमतः। अन्यथा संलक्ष्यक्रमध्वने र्दशविधत्व-प्रति-पादिका "एवं साकल्येन दश-भेदोऽयम्"[१] इति तदीयोक्तिर्विरुद्ध्येत। द्व्युत्थध्वनेरस्वीकारे तु न विरोधः। शब्द-शक्तिमूलस्य वस्त्वलंकाररूपौ द्वौ, अर्थशक्तिमूलस्य चाष्टौ भेदानादाय दशविधत्वोक्तेः समुचितत्वात्। तदस्वीकारबीजं तेन 'अन्ये तु'[२] इत्यादिना प्रति-पादितम्। तस्यायं सारांशः-यत्र नानार्थक शब्दानां सर्वथाऽभावस्तत्रैवार्थशक्तिमू-लकत्वव्यपदेशः। एतादृशा नानाविषयाः सन्ति यत्र नानार्थशक्तिमूलकत्वव्यपदेशः। एतादृशा नाना विषयाः सन्ति यत्र नानार्थकश-ब्दानां सर्वथाऽभावः। किन्तु शब्दशक्तिमूलकत्वव्यपदेशे परिवृत्तिसहिष्णुशब्दा-भावो नाभिप्रेतः। अर्थाद् यत्र शब्दशक्तिमूलो ध्वनिस्तत्रार्थशक्तिमूलोऽपि भवत्येव। तादृशो विषयो नहि क्वचिदुपलभ्यते यत्र शब्दशक्तिमूलध्वनि-स्थलेऽर्थशक्तिमूलो नास्ति। अतः कतिचिच्छदानां परिवृत्ति-सहिष्णूनां सत्त्वेऽपि नानार्थक-पदस्थले शब्दशक्तिमूलकत्वेनैव व्यवहारः। एवं नानार्थकशब्द-सर्वथा-भावस्थलेऽर्थशक्तिमूलो नानार्थकपदस्थले च शब्दशक्तिमूलो ध्वनिः। पण्डितरा-जमते योगरूढशब्दस्थले शब्दशक्तिमूल इति त्वन्यत्। एवं 'रम्यहासा' इत्यादौ पद्येऽन्येषां शब्दानां परिवृत्तिसहत्वेऽपि नानार्थक-परिवृत्त्यसहिष्णु-हास-रस-रसि-कालि शब्दानां सत्त्वेन शब्द-शक्तिमूलोऽयं ध्वनिः। यद्यपि "अन्ये तु" इत्यादिना प्रकाशितो विचारो पण्डितराजस्य नाभिप्रेतः, "अन्येतु" इत्यनेनारुचेः[३] सूचितत्वात्, तथापि तस्य मते न शब्दार्थोभयशक्तिमूलध्वनेः स्वीकारः, संलक्ष्यक्रमस्य दशभेद-त्वकथनस्यानुचितत्वात्। अतः प्राचीनरीत्या उभयशक्त्युध्वनेर्वर्णनमिति मन्त-

---

१. र० गं० घ० सं० हि० व्या० उ० प्रे० द्वि० भा०, ४ पृ०।

२. अन्येतु—'अर्थशक्तिमूलत्वव्यपदेशे नानार्थप्रकाशक-शब्दशक्त्युल्लास्यत्व-सामान्यशून्यत्वं तन्त्रम्। विषयप्राचुर्यात्। शब्दशक्तिमूलकत्वव्यपदेशे तु नार्थशक्त्युल्लास्यत्वसामान्यशून्यत्वं तथा, विषय-दौर्लभ्यापत्तेः;नहि नानार्थशब्दमात्रघटितं पद्यं प्रचुरविषयम्। अतः शब्दशक्तिमूलकत्वेनै वायं शक्यव्यपदेशो ध्वनिः। 'इत्याहुः।" —तत्रैव ११८ पृ०

३. 'अन्येतु' इत्यनेनात्रारुचिः सूचिता, तद्बीजंऽचैतद्यत् प्राचीनोक्तरीत्या तृतीयभेदसम्भवे तत्त्यागे कारणाभावः। कुत्रापिभेदे लक्ष्याल्पता तद्भेदपरित्यागाय नालम्, अपितु लक्ष्या सम्भव इति तत्त्वम्।' —तत्रैव, ११८ पृ०। उक्तरीत्या भेद संभव एवात्रारुचिः। —गु० म० प्र० १७५ पृ०।

व्यम् । अतएव संलक्ष्य-क्रमवर्णनावसरे संलक्ष्यक्रमस्य पूर्वं द्विधात्वमेवोक्तम् ।[१] योगरूढस्थले यौगिकरूढस्थले च रूढ्या यौगिकार्थे बाधिते तस्य यौगकार्थस्य व्यञ्जनया प्रतीतिस्थले शब्दशक्तिमूलो ध्वनिः स्वीकृतोऽन्यत्र चार्थशक्तिमूलः । तादृशं स्थलं पण्डितराजेन न प्रदर्शितं यत्र योगरूढादिशब्दानां परिवृत्त्यसहिष्णूनां परिवृत्तिसहिष्णूनां च स्थितिः, येन तन्मत उभयशक्त्युत्थध्वनेः स्वीकारः प्रतीयेत । मम्मटेन "उल्लास्यकाल" इत्यदिपद्य उक्त उपमालंकार-ध्वनिरपि नानोपायैः पण्डितराजेन निरस्तः । समासोक्तौ व्यङ्ग्यस्याप्रकृतव्यवहारस्य प्रकृतोपस्कारकत्ववदत्रापि उपामायाः प्रकृतोपस्कारकत्वम् । अत उपमाया गुणीभूतत्वमेव । उपमायाः प्रकृतोपस्कारकत्वं मम्मटेनापि प्रोक्तम् । न च समासोक्तौ प्रकृतस्य न नानार्थशब्दवाच्यत्वम्, अत्र च प्रकृतस्य तथात्वमतो नोपमाया गुणीभूतत्वमिति वाच्यम् । नानार्थपदोपस्थाप्यत्वमात्रेण प्रकृतोपस्कारकताया अकथनस्यायुक्तत्वात् । ननूपमाया उपमानमुपमेयं साधारण-धर्म इति शरीरघटकम् । इत्थमुपमेयस्य सादृश्यांशेनोपस्कारेऽपि उपमाया अपरांगत्वाभावः । उपमेयस्य पराङ्गत्वाभावात् । यथा प्रकृतव्यवहारस्य प्रकृतोपस्कारकत्वेऽपि प्रकृताप्रकृतानिरूपितायाः समासोक्तेनर्पिराङ्गत्वम् । इति चेन्न, समासोक्तिरिवास्याप्युपमाध्वनेर्गुणीभूतत्वापत्तेः, उपमाया इव वा समासोक्तेरपि ध्वनित्वापत्तेर्वा । नहि समासोक्तेर्ध्वनित्वं ध्वनि-कारादिभिरुक्तम् ।[२] अतः समासोक्तेरिव उपमाया अपि गुणभूतत्वमेव न्याय्यम् । किञ्च श्लेष-स्थले नानार्थयोरेकपदोपात्तत्वेनाभेद एव प्रतीयत इति सकलालंकारिकसिद्धम् । अतः "उल्लास्यकालकरवालेत्यादौ प्रकृतप्राकृतयो राजेन्द्रयोरभेदस्यैव व्यङ्ग्यत्वं नोपमाया इति मन्तव्यम् । एवमादिना उपमाया ध्वनित्वं खण्डितम् ।"

एवमर्थशक्तिमूलध्वनेरष्टविधस्य पद-वाक्य-प्रबन्धगतत्वेन चतुर्विंशतिविधत्वम् । शब्दशक्तिमूलस्य च पद-वाक्यगतत्वेन मम्मटमतवच्चतुर्विधत्वम् । एवं संकलनेन रसादिध्वनेरष्टाभिर्भेदैः सहाऽभिधामूलध्वनेः षट्त्रिंशत् (३६ भेदाः । लक्षणामूलध्वनेर्मम्मटमतवच्चत्वारो भेदाः । अतः शुद्धध्वनिभेदाश्चत्वारिंशत् । यदि "एवं साकल्येन दशभेदोऽयम्" इत्यत्र "अन्येषां मते" इत्याक्षिप्यते "संलक्ष्य-

---

१. स च तावद्द्विविधः शब्दशक्तिमूलोऽर्थशक्तिमूलश्च ।
—र० गं० चं० सं० हि० व्या० उ० प्रे० द्वि० मा०, २ पृ०

२. ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः । —का० प्र०, उ० ८, सू० ८७ ।

क्रमस्य अन्येषां मते दश भेदाः मम मते तु शब्दार्थोभयशक्तिमूलोऽपि" इति तस्याशयो वर्ण्यते च तदा ध्वनेः (४२) एक चत्वारिंशद्भेदा पण्डितराजमते मन्तव्याः। "अन्येषां मते" इत्याक्षेपे "अन्ये तु" इतिपदेन प्रदर्शितं प्राङ्मर्मप्रकाशोक्तं पण्डितराजस्यारुचिबीजं बीजम्। संकीर्णध्वनिभेदाः काव्यप्रकाशदिशा साहित्यदर्पणदिशा वा रसगंगाधरस्य मता इति वक्तुं न शक्यते।

**गुणविषये तुलना :—**

काव्ये माधुर्यौजःप्रसादाख्यास्त्रयो गुणाः। ते काव्यात्मभूतस्य रसस्यैव धर्माः। यथा शौर्यवीर्यादय आत्मधर्मा न तु शरीरधर्माः। ते च गुणा अङ्गिन एव रसस्य धर्मा नत्वङ्गस्य। ते चोत्कर्षहेतव आत्मभूतस्य रसस्य। इमे नियतस्थितयः। एषां नैयत्यञ्च रसेन तदुपकारेण च। तदुपकारश्चानुभवसिद्ध-चित्त-द्रुत्यादिरूप-कार्यविशेषप्रयोजकत्वरूपः। एते गुणा रसं विना नावतिष्ठन्ते ऽवस्थिताश्चावश्यं रसमुपकुर्वन्ति। एवं रसोपकारकत्वे सति रसाव्याभिचारिस्थितिकत्वम् अभिव्यभिचारेण रसोपकारकत्वं चेति गुणानां लक्षणद्वयं फलितम्।[१] अलंकारा नार्व्याभचरितस्थितयः रसाभावस्थलेऽपि तेषां सत्त्वात्। एवं नाव्यभिचारेण रसोपकारकत्वम्। सत्त्वेऽपि क्वचिदनुपकरणात्। ते चालङ्कारा न रसे साक्षात् स्थिताः। तेषां शब्दार्थाश्रयत्वात्। तेषां परम्परया क्वचिद्रसोपकारकत्वम्। गुणानाञ्च साक्षात् सदा तदुपकारकत्वम्। काव्य-प्रदीपे त्रिधा गुणलक्षणमुक्तम्।[२] चण्डीदासो रसधर्ममात्रं गुण-लक्षणं मन्यते। किन्तु तस्य तथा कथनमयुक्तम्। श्रृङ्गारत्वादावतिव्याप्तेः। ननु रसधर्मत्वमेषां गुणानामनुपपन्नम्, नीरसेऽपि सुकुमारवर्णरचनायां मधुरशब्द प्रयोगदर्शनात्, इति चेन्न। यतो हि शौर्यादीनामात्मधर्मत्वं सर्वसम्मतम्। क्वचिल्लोके आकार-महत्वादिमति अशूरेऽपि 'शूरोऽयम्' इति व्यवहरन्ति जनाः। तस्येदं कारणं यत्तै र्जनैराकारमहत्त्ववति क्वचिज्जने शूरत्वं दृष्टम्, यद्वशादशूरेऽपि आकारमहत्त्वयोगिनि तथा व्यवह्रियते। तथा श्रृङ्गारादिरसस्थले सुकुमारादिवर्णान् विलोक्य नीरसेऽपि 'मधुरा रचना' इत्यादिव्यवहारः। तत्त्वज्ञाः शौर्यादि-धर्मानात्म-

---

१. ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः। उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः। —का० प्र०, उ० ८, सू० ८७।

२. रसस्योत्कर्षहेतुत्वे सति रसधर्मत्वम्, तथात्वे सति रसाव्यभिचारिस्थितित्वम्, अयोग व्यवच्छेदेन रसोपकारकत्वं चेति लक्षणत्रयं गुणानां द्रष्टव्यम्। —का० प्र० दी०, २७४ पृ०

नो मन्यमाना 'आकारोऽस्य शूरः' इति व्यवहारमौपचारिकं मन्यन्ते । एवं काव्य शास्त्रेऽपि 'मधुरा रचना' इत्यादयो व्यवहारा औपचारिकाः । वर्ण-रचनादीनां तत्तद्गुणविशिष्टरसाभिव्यञ्जकत्वात्तथा व्यवहाराः ।

'काव्यशोभायाः कर्तारो गुणास्तदतिशयहेतवस्त्वलंकाराः' इति वदन् वामनो गुणानां शब्दार्थाश्रितत्वं प्रतिपादयामास । तन्निरस्तम् । वामनः पदसङ्घटनात्मिकां त्रिविधां रीतिं काव्यात्मानं व्याजहार । रीतयश्च त्रिधा-वैदर्भी गौड़ी पाञ्चाली च । सर्वगुणव्यञ्जक-वर्णवती वैदर्भी, प्रसादौजोव्यञ्जकवर्णवती गौडी माधुर्य-प्रसाद-गुणव्यन्जकवर्णवती पाञ्चाली । यदि समस्तैर्गुणैः शब्दार्थगतैः विंशतिविधैः काव्यत्व-व्यवहारस्तदा असमस्तगुणाया वैदर्भ्याः पाञ्चाल्याश्च स्थले काव्यत्वव्यवहारो न स्यात् । यदि कतिपयै र्गुणैः काव्यव्यवहारस्तर्हि "अद्रावत्र प्रज्वलत्यग्निरुच्चैः इत्यादावोजो-गुणसत्त्वेन नीरसे काव्य-व्यवहारापत्तिः, स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनि" इत्यादौ गुणाभाववति काव्यव्यवहार-प्रवर्तक-विशेषोक्ति-व्यतिरेक-स्थले काव्यव्यवहारानापत्तिः । मम्मटेन वामनोक्ता विंशतिर्गुणा अपि खण्डिताः । अप्रकृतत्वात्तदुपरि विचारो न क्रियते ।

माधुर्यगुणनिरूपणम् :—

द्रुतिकारणमाह्लादकत्वं माधुर्यम् ।[१]आह्लादनमाह्लादः । ततः स्वार्थिकः क प्रत्ययः । घञ्च भावे । तत आनन्दस्वरूपत्वमाह्लादकत्वपदार्थ इति मन्तव्यम् । ननु 'आह्लादयति आनन्दयति इत्याह्लादकः, तस्य भाव आह्लादकत्वम्' इत्येव कथं नाह्लादकत्व-पदार्थ इति चेन्न, तथात्वे 'आह्लादजनकत्वं माधुर्यम्' इति लक्षणं स्यात्तदा च 'श्रृङ्गारे इति माधुर्यलक्षणप्रतिपादके सूत्र उक्तं पदमसङ्गतं स्यात् । तथाहि श्रृंगारे आह्लादजनकत्वं विरुद्धम्, तस्य स्वत आह्लादरूपत्वात् । अतः प्रागुक्त एवाह्लादकत्वपदार्थः स्वीकार्यः ।[२] ननु' आह्लादरूपत्वं माधुर्यम् इति लक्षणंस्य रसेषु अतिव्याप्तिः, तेषामप्याह्लादरूपत्वादिति चेन्न, द्रुतिकारणमित्यस्योक्तत्वात् । द्रुतिश्च चेतसो विगलितत्वमिव द्वेषादिजन्यकाठिन्याभावः । रसानां न समेषां

---

१. आह्लादकत्वं माधुर्यं श्रृंगारे द्रुतिकारणम् । —का० प्र० ३-८, स० ९० ।

२. आह्लादनमाह्लादः भावे घञ् । ततःस्वार्थे क प्रत्ययः । आनन्दस्वरूपत्वमित्यर्थः । —का० प्र० वा० टी०, पृ० ४७४ । 'द्रुतिकारणमाह्लादकत्वमानन्दस्वरूपत्वं माधुर्यम्, न तु आनन्द जनकत्वम्, श्रृङ्गारस्याह्लाद-स्वरूपत्वेनाह्लाद हेतुत्वाभावात् । अतएव श्रृङ्गारे इति सार्थकम् ।' —का० प्र० नागे० टी०, पृ० २८८ ।

स्वतश्च द्रुतिकारणता। अतो न लक्षणातिप्रसंगः। एवं द्रुतिकारणमानन्दरूपत्वं माधुर्यमिति लक्षणं पर्यवसन्नम्। रसगङ्गाधरस्य रसचन्द्रिकाख्य-व्याख्याकाराः केदारनाथ-ओझा महाभागाः कथयन्ति यत्काव्य-प्रकाश-कृत-माधुर्यादि-गुणलक्षणे वस्तु-स्वरूपनिर्णये महान् सन्देहो जागर्ति। तथाहि 'आह्लादकत्वं माधुर्यं श्रृंगारे द्रुतिकारणम्, दीप्त्यात्मविस्तृतेर्हेतुरोजः' 'इत्यादि कथनेन आह्लादकत्वमित्यत्र त्वप्रत्ययप्रयोगेण द्रुतिकारणमित्यस्यापि द्रुतिकारणत्वं माधुर्यं दीप्तिजनकत्वं च ओज इत्यर्थ आयाति। अन्यत्र च त्वप्रत्ययाप्रयोगेण 'द्रुतिकारणं माधुर्यम्' इत्यादिरर्थ आयाति। ततो महान् पदार्थभेदः। प्रथमपक्षे द्रुतिकारणत्वं माधुर्यस्य सत्यं रूपं निर्णीयते, परन्तु कारणत्वस्यापि व्यञ्जकं किञ्चित् क्वचिन्नाङ्गीक्रियते। एवं गुणाभिव्यञ्जकोक्तिरपार्था स्यात्। कथञ्चिदङ्गीक्रियेत सामग्र्येव कारणत्वव्यञ्जिका नान्यत्।

द्वितीयपक्षे द्रुत्यादिकारणं माधुर्यादिस्वरूपमायाति। द्रुत्यादीनां किं कारणं रचनादिभिरभिव्यज्यमानं रसगतमिति जिज्ञासोदेति। तच्च कारणं न लक्षितं ग्रन्थकृता, इत्यननुगमो गुण स्वरूपस्य। यदि द्रुत्यादीन् प्रति श्रृङ्गारादीनां माधुर्यादीनाञ्च कारणत्वमङ्गीक्रियते तर्हि किं मिलितयो र्गुण-रसयो र्द्रुत्यादिजनकत्वमुत सहकारिभावेन? इति पृच्छ्यते। मिलितयोः कारणत्वे गुणं विना रसो द्रुत्यादि करोति न वा। आद्ये गुणानां वैयर्थ्यम्। यदा गुणरहितस्य रसस्य रसास्वादमात्रजनकत्वं तद्विशिष्टस्य तु द्रुत्यादिजनकत्वमपीति कथने गुणानामेव द्रुत्यादिजनकताभ्युपेया न तु रसानामपि। द्वितीयेऽप्येष एव दोषः। किञ्च माधुर्यादीनां पृथक् किञ्चित् कार्यं प्रति कारणत्वस्याऽप्रसिद्ध्या स्वरूपसिद्ध्यभावेन सहकारिकारणत्वमपि न सिद्ध्यति। काव्य-प्रकाशे द्रुतिकारणमित्यादौ द्रुतिकारणत्वमित्यादि त्वप्रत्ययान्ततयैव व्याख्येयम्। एवं श्रृङ्गारादिगता या द्रुत्यादिजनकता सैव माधुर्यादिः। कारणत्वस्याभिव्यङ्ग्यत्वमित्थम्-मधुररचनयाभिव्यक्तः श्रृङ्गारो द्रुतिं जनयति न तु शुद्धः। एवं श्रृङ्गारनिष्ठा द्रुतिकारणता रचनाभिव्यङ्ग्यत्वमपेक्ष्यैव। मधुरा रचना द्रुतिजनकताविशिष्टश्रृंगाराभिव्यञ्जिका। एवमेव सर्वत्र काव्यप्रकाशमूलयोजना। द्रुतिकारणत्वरूपस्य माधुर्यस्य दीप्त्यादिकारणत्वस्य चौजसः साक्षाद् रसनिष्ठत्वेन रसधर्मता गुणानामविरुद्धा। न च रचनादीनामेव रससहकारेण द्रुत्यादिजनकतेतिवक्तव्यम्, द्रुत्यादीनां रसास्वादकुक्षौ प्रविष्टत्वेन रसानां रसास्वादं प्रति कारणताया अवश्यवाच्यत्वेन रसानामेव तज्जनकतायाः स्वीकारस्योचितत्वात्। गुणानां रसो-

पकारश्च रसास्वादस्योपकार इत्यर्थः, न तु रसस्य रत्याद्यवच्छिन्नचैतन्यात्मनः कश्चिदुपकारः। रसास्वादश्च स्थाय्यवच्छिन्न चैतन्यस्वरूपकारा चित्तवृत्तिरेव।'[१]

इत्थमनुमीयते यद्रसचन्द्रिकाकारेण काव्य-प्रकाशस्थाऽऽह्लादकत्वपदस्य तात्पर्यमानन्दजनकत्वमेव स्वीकृतम्। अतएव द्रुतिकारणत्वं माधुर्यमिति व्याख्यातम्। वस्तुतो रसेषु आह्लादजनकता नोचितेति प्रागेवावेदितम्। तेषां स्वत आह्लादरूपत्वात्। अतो द्रुतिकारणम् आह्लाद एव माधुर्यमिति मन्तव्यम्। नहि द्रुतिकारणादिपदस्य क्वचित्त्वेप्रत्ययान्ततया व्याख्यानम्।

'माधुर्यञ्च संयोग शृंगारे यदस्ति, ततोऽतिशयितं करुणे, ताभ्यां चातिशयितं विप्रलम्भे तेभ्यश्च च तथा शान्ते, उत्तरोत्तरमतिशायिता याश्चित्तद्रुतेर्जननात्।' "करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्" इतिसूत्रे 'बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च 'इति सूत्रतः क्रमेण' इति पदस्यापकर्षे तस्य सूत्रस्यार्थः तादृशः सम्पद्यते। तदनपकर्षे च' संयोगश्रृङ्गारात् करुणे विप्रलम्भे शान्ते च माधुर्यमतिशयितमेव, न तु तत्रापि तारतम्यम् इति सूत्रार्थः।

**ओजोगुणनिरूपणम् :—**

'दीप्त्यात्मविस्तृतेर्हेतुरोजः'[२] इति ओजोलक्षणाम्। आत्मशब्दोऽत्र चित्तपरः।

**"आत्मा कलेवरे यत्ने स्वभावे परमात्मनि।**

**चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च॥"इति**

धरणिकोशोक्तेः। दीप्तिर्दीप्तिरूपज्वलितत्वरूपा या आत्मनश्चित्तस्य विस्तृति र्विस्तारस्तस्या हेतुरोजः। येन गुणेन चित्तस्य दीप्तिरूपो विस्तार उत्पद्यते स ओज इति फलितार्थः। स चौज़ोगुणो वीररसे विद्यते, ततोप्यधिको बीभत्से, ततोधिकतमो रौद्रे, उत्तरोत्तरमतिशायितायाश्चित्तदीप्तेर्जननात्। रसचन्द्रिकाकारमते 'दीप्तिहेतुत्वमोजः' इति लक्षणं ज्ञेयम्।

**प्रसादगुणनिरूपणम् :—**

सर्व-रस-रचनादिसाधारणः, शुष्क-काष्ठ-स्वच्छजलवत् सहसैव यो गुणो चित्तं व्याप्नोति स प्रसादः।

१. र० गं० र० चं० पृ० १३९-४०।
२. का० प्र० उ० ८, सू० ९२।

"शुष्केन्धनादिवत्स्वच्छजलवत् सहसैव यः ।
व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्रविहितस्थितिः ।"

इति सूत्रं व्याख्यान् झलकीकरवामन इत्थमाहः—

"शुष्केन्धनाग्निवत् अग्निर्यथा शुष्कम् इन्धनं काष्ठं सहसैव झटित्येव व्याप्नोति प्रसरति, आर्द्रेन्धनेऽग्नेरप्रसरात् स्वच्छजलवत् जलं यथा स्वच्छं पटं सहसैव व्याप्नोति मलिनपटे जलस्याप्रसरात् तद्वद् यः गुणः, अन्यद्व्याप्यं चित्तं (कर्म) सहसैव व्याप्नोति, असौ सः प्रसादः प्रसादाख्यः स्वच्छतारुपो (विकासरूपः) गुण इत्यर्थः । यदा वीररौद्रादिषु चित्तं व्याप्नोति तदा शुष्केन्धनादिवदिति यदा श्रृङ्गारकरुणादिषु तदा स्वच्छजलवदिति इति बोध्यम्। येन गुणेन रसाः सहसैव चित्तं व्याप्नुवन्ति स प्रसाद इति फलितोऽर्थः ।"[१] माधुर्यगुणलक्षके सूत्रे 'यः' इति पदे करणस्य स्वातन्त्र्यविवक्षया कर्तरि प्रथमा । 'करणस्यापि स्वातन्त्र्यविवक्षया च इति निर्देशः' इति प्रदीप-वचनात् ।[२] एवं विकासाख्यचित्तवृत्तेः कारणं प्रसाद इति फलितार्थः । रसचन्द्रिकाकारमते तादृशचित्तवृत्तिनिष्ठकार्यतानिरूपिता श्रृंगारवीरादिरसनिष्ठा कारणता माधुर्यमित्यर्थः ।

"एवं च माधुर्यादीनां त्रयाणां क्रमेण द्रुतिदीप्तिविकासाख्याश्चित्तवृत्तयः कार्या इति कथितम् ।"[३] इति झलकीकरवामन-वचनेन प्रतीयते यद् द्रुत्यादिकारणाण्येव माधुर्यादयो गुणाः । पण्डितराजमतपरिपोषणपरायणस्य रसचन्द्रिकाख्य-रसगङ्गाधरव्याख्याकृतो मते रसनिष्ठा द्रुत्यादिकारणतैव गुणः ।

"श्लेषः प्रसादः समता
माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्व-
मोजःकान्तिमसमाधयः"
इति वैदर्भमार्गस्य
प्राणा दश गुणा मताः

१. का० प्र० वा० टी० ४७६ पृ०
२. का० प्रदी० २८० पृ०
३. का० प्र० वा० टी० ४७६-७७ पृ०

इति वामनोक्ता दश शब्दगुणा:, तथा चार्थगुणा नाङ्गीकार्या: । तेषां मध्ये केषांचिद् दोषरूपत्वात् केषांचिद् दोषाभावरूपत्वात् केषांचिच्च प्रोक्त-गुण-त्रयेऽन्तर्भावाच्च । सामाजिकानां रसास्वादजन्यास्तिस्रोऽवस्था: भवन्ति । द्रुतिर्वि-स्तृतिर्विकासश्च । तत्र श्रृंगार-करुण-शान्तरसेभ्यश्चित्तस्य द्रुतिर्वीरवीभत्स-रौद्रेभ्यश्च तस्य विस्तारस्तस्यैव हास्याद्भुतभयानकेभ्यो विकास: । विकासश्च क्वचिद्द्रुत्या क्वचिद् विस्तृत्या च युक्तो भवति । प्रसाद: सर्वेषामाधिक्यकारी । आसां तिसृणामवस्थानां नियामकानि त्रीण्येव कारणानि कल्प्यन्ते । कारणवैचित्र्येण त्रयाणामेव स्फुटमुपलम्भात् । अवान्तरगुणानामङ्गाङ्गिभाव-वैचित्र्येणानन्तगुणक-ल्पनापत्ति: । इत्थमाशयो नागेशस्य उद्योतकृत: । एवम्मम्मटमते द्रुत्यादि चित्तवृत्ति-कारणानि तादृशाचित्तवृत्ति कारणता वा रसनिष्ठा गुणा स्थिता: ।

रसगङ्गाधरकारो गुणानां रसमात्रधर्मत्वं खण्डयामास । एषां गुणानां रसमात्र-धर्मत्वे मानाभाव: । न च प्रत्यक्षमेव मानमिति वाच्यम्, अग्ने: कार्याद्दाहादे: पृथक् तद्गतोष्णस्पर्शगुणानुभववद् द्रुत्यादिचित्तवृत्तिभ्य: कार्येभ्य: पृथग्रसनिष्ठानां गुणा-नामनुभवस्याभावात् । ननु गुण-विशिष्टानां रसानां द्रुत्यादिचित्तवृत्ती: प्रति कार-णता । कारणता किञ्चिद्धर्मावच्छिन्ना । यथा दण्डनिष्ठा घटादिनिष्ठ-कार्यता-निरूपिता कारणता दण्डत्वधर्माऽवच्छिन्ना । या या कारणता सा सा किञ्चिद्धर्मावच्छिन्नेति व्याप्ति: सिद्धा । अतो द्रुत्यादिनिष्ठकार्यता-निरुपि-ताया: कारणताया स्तादृशरसनिष्ठाया अवच्छेदकेन केनचिद् धर्मेणावश्यं भाव्यम् । स च धर्मो गुण एव न तु रसत्वम् । केवलरसानां द्रुत्यादिजनकत्वाभावात् । एवं कारणतावच्छेदकत्वेन गुणानां परिशेषानुमिति: । अनया गुणानां रसधर्मत्वमविरु-द्धमिति चेन्न, 'द्रुतिं प्रति श्रृङ्गार: कारणम्' इत्यादिरीत्या द्रुत्यादिचित्त वृत्ती: प्रति श्रृङ्गारादीनामेव कारणतानां कल्पनेन कारणतावच्छेदकानां श्रृङ्गारत्त्वादीनामेव स्वीकाराद् गुणकल्पने गौरवाच्च । स श्रृङ्गारत्वादीनां क्लृप्तानामवच्छेदकत्वकल्पने लाघवम् । कलृप्त गुणानां तथात्वकल्पने च गौरवमिति भाव: । ननु 'द्रुतिं प्रति शृंङ्गार: कारणम्, द्रुतिं प्रति करुण: कारणम्, द्रुतिं प्रति शान्त: कारणम्, दीप्तिं प्रति वीर: कारणम् तां प्रति रौद्र: कारणम्, तामेव प्रति वीभत्स: कारणम्, विकासं प्रति हास्य: कारणम्, तं प्रति अद्भुतं, कारणम्, तं प्रति भयानक: कारणम्,' इति रीत्या नवानां रसानां द्रुत्यादीन् प्रति पृथक् कार्यकारणभावकल्पने नव-कार्यकारणभावकल्पन्ना-पत्ति:, माधुर्यवन्तो रसा द्रुतिं प्रति, ओजोगुणवन्तो रसा दीप्तिं प्रति, प्रसादवन्तश्च ते विकासं प्रति कारणम् इति सामान्यत: कार्यकारणभावकल्पने त्रय एव कार्यकारण-

भावा: कल्पनीया: । अतो भवन्मत एव गौरवमिति चेन्न, मम्मटमते सामान्यत: कार्यकारणभावकल्पनस्यानुपपन्नत्वेन प्रातिस्विकरूपेणापि कार्यकारणभाव-कल्पनापत्तौ त्रयोदशानां कार्यकारणभावानां कल्पनीयत्वापत्ते: । तथाहि-मम्मटेन, द्रुतिं प्रति सम्भोगश्रृङ्गारस्य, अतिद्रुतिं प्रति करुणस्य, अतितमां द्रुतिं प्रति विप्रलम्भस्य, ततोऽतिशयद्रुतिं प्रति करुणस्य, अतितमां द्रुतिं प्रति विप्रलम्भस्य, ततोऽतिशयद्रुतिं प्रति च शान्तस्य कारणता स्वीकृता । यदा श्रृङ्गार करुणशान्तेभ्य एकविधैव द्रुतिर्जयेत तर्हि माधुर्यत्वेनैषां सामान्यत: कार्यकारणभावकल्पनं संगतं स्यात् । किन्तु नैकविधाया: द्रुतेरुत्पत्ति: । अत: पृथग्रूपेणैव कार्यकारण-भावा इति मम्मटेनापि स्वीकर्तव्यम् । एवं श्रृङ्गार-करुण-शान्त स्थले प्रागुक्ताश्चत्वार: कार्यकारणभावा: । वीर-वीभत्स-रौद्रस्थले च त्रयस्ते । वीरादीनां दीप्ति-दीप्तितर-दीप्तितमानां जनकत्वात् । एवं हास्यादिस्थले च त्रय: कार्य-कारणभावा: । अतो मम्मटनये प्रातिस्विकरूपेण दशकार्यकारणभावानां कल्पन्ना । सामान्यत: 'मधुराणां श्रृङ्गारादीनां द्रुतिं प्रति, ओजस्विनां वीरादीनां च दीप्तिं प्रति, प्रसन्नानां हास्यादीनां च विकासं प्रति' इति त्रय: कार्यकारणभावा: । इत्थं सम्मिलितास्ते त्रयोदश । अतो मम्मटमते गौरवम् । वस्तुत: सामान्यत: कार्यकारणभाव कल्पनं गडुभूतमिति प्रागेवावेदितम् । अतो रसानां प्रातिस्विकरूपेणैव कारणत्वकल्पनम् । इत्थं गुणानां रसधर्मत्वं निरस्तम् । निर्गुण: शुद्धश्चैतन्यस्वरूप आत्मा रस: । तत्र गुणकल्पनमनुचितम् । न च गुणानां रत्यादिनिष्ठत्वमिति वाच्यम् । अन्त: करण-गुणेषु रत्यादिषु गुणान्तर कल्पनस्यानुचितत्वात् । नैयायिकैर्गुणेषु गुणान्तरं नाङ्गीक्रियते ।

अतो द्रुत्यादिचित्तवृत्ति-प्रयोजकत्वं प्रयोजकतासम्बन्धेन द्रुत्यादिकमेव वा माधुर्यादिकम् । अर्थात् द्रुतिप्रयोजकत्वं माधुर्यम्, दीप्तिप्रयोजकत्वमोज:, विकास प्रयोजकत्वं प्रसाद इति गुणानां लक्षणम् । तादृशचित्तवृत्तिप्रयोजकत्वं च शब्दार्थ-रस-वर्णरचनादिनिष्ठम् । अतो मम्मटमतवद् "मधुरा रचना ओजस्वी बन्ध" इत्यादिव्यवहारोपपत्तये न पण्डितराजमते लक्षणा-कल्पना । एते व्यवहारा मुख्या एव न तु भाक्ता: । लक्षणाकल्पनमपि मत एतस्मिन् लाघवम् । न च तादृश-चित्तवृत्ति-प्रयोजकत्वस्य गुणत्वे स्वीकृते तादृशचित्तवृत्तिप्रयोजकत्ववति अदृष्टकालादौ 'मधुरमदृष्टम्, मधुर: काल:, ओजस्वी काल:' इत्यादिव्यवहाराणामापत्तिरिति वाच्यम् । अदृष्टादिविलक्षणशब्दार्थ-रस-रचनागतस्यैव तादृशचित्तवृत्तिप्रयोजकत्वस्य गुणत्वाङ्गीकारात् । श्रृङ्गारादीनां सद्यो द्रुत्या अभावेऽपि पार्यन्तिकं रसास्वादकालिकं द्रुत्यादिकं तत्-प्रयोजकत्वं वाऽदाय 'मधुर: श्रृङ्गार:' इत्यादयो व्यवहारा: ।

यथा अश्वगन्धाया औषधेः सद्यः सततमुष्णत्वाऽभावेऽपि भक्षणानन्तरं पारिणामिकमुष्णत्वं तज्जनकत्वं वाऽऽदाय 'अश्वगन्धोष्णा' इति व्यवहारः ।

वस्तुतः 'वाजिगन्धोष्णा' इत्यादिव्यवहारा लाक्षणिका एव । 'मधुरः शृङ्गारः, मधुरा रचना' इत्यादयोऽपि ते तथेति स्वीकार्यम् । अतो रसगङ्गाधरकारमतेऽपि लक्षणा-कल्पना भवत्येव । अतो न तदकल्पनजं लाघवमिति विवेचयन्तु विपश्चितः ।

**रीतिविषयेतुलना :—**

वृत्ति-रचना-घटना-मार्गादयः शब्दा रीतिमेवाऽभिदधति । रीतिबोधनार्थं मम्मटेन वृत्तिशब्दः प्रयुक्तः, सा च वृत्तिस्त्रिधा-उपनागरिका परुषा कोमला च । एता एव वृत्तयो वैदर्भी-गौडी-पाञ्चालीशब्दै र्व्यवह्रियन्ते ।

माधुर्यव्यञ्जकवर्णैरुपेता[१] असमासा अल्पसमासा वा रचनौपनागरिकीत्युच्यते । शिरसि स्ववर्गान्त्यङादियुक्ता टवर्गवर्जा कादयो मावसाना रणौ च लघू वर्णा माधुर्यस्य व्यञ्जकाः । असमासा अल्प-समासा च घटनाऽपि तथा ।[२] ओजोगुणव्यञ्जकैवर्णैः परुषा वृत्तिः ।[३] वर्ग्याणां प्रथम तृतीयाभ्यां द्वितीयचतुर्थयोः स्वयोर्वा योग उपर्यधो रेफेण युक्तो वर्णः टवर्ग्याः श्चत्वारः शषौ दीर्घसमासश्चौजोगुण व्यञ्जकाः ।[४] माधुर्यौजोगुणव्यञ्जकभिन्नवर्णैरुपेता रचना कोमला वृत्तिः ।[५]

'अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः' इत्यादौ२ वैदर्भी रीतिः (उपनागरिका वृत्तिः) मूर्ध्नि स्ववर्ग्य-पञ्चमवर्णङ्कारयुक्तस्य कवर्गतृतीयस्य माधुर्य व्यञ्जकस्य गकारस्याऽत्र विद्यमानत्वात् ।

'मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधाराधौतेशाङ्घ्रिप्रसादोपनतजयजगज्जात मिथ्या महिम्नाम्' इत्यादौ परुषा वृत्तिः । उपर्यधोरेफयोगस्य तकारेण

---

१. माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते । —का० प्र० १०९ सू० ।

२. मूर्ध्निवर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥ —तत्रैव ९९ सू० ।

३. ओजः प्रकाशकैस्तैस्तु परुषा । —तत्रैव११० सू० ।

४. योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः ।
टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि । —तत्रैव १०० सू० ।

५. कोमला परैः —तत्रैव ११० सू० ।

तका- रयोगस्य षकारस्य चौजोव्यञ्जकानां वर्णानां समासबाहुल्यस्य च वर्तमानत्वात् ।

'अपसारय घनसारं दूरे कुरु हारं किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं वाला ॥'

इत्यत्र कोमला वृत्तिः । माधुर्यौजोव्यञ्जकभिन्नवर्णानां विद्यमानत्वात् । अत्र न केऽपि वर्णा माधुर्यव्यञ्जकाः । येऽपि लघुस्वरयुता रेफास्ते त्वतिव्यवहिता । न माधुर्यं व्यञ्जयितुमीशाः । मूर्धिवर्गान्त्यगानामभावः स्फुट एव । आद्यतृतीयादियोगाभावोऽपि तथा । इत्थमेतादृशस्थले कोमला वृत्तिः । अर्थादत्र प्रसादगुणव्यञ्जका वर्णाः ।

एता एव वृत्तयो वामनादिमते वैदर्भीगौडी-पाञ्चालीनामिका रीतयः । कुन्तकेन चैता एव सुकुमार-विचित्र-मध्यममार्ग शब्दैरभिहिताः । पण्डितराजेन वैदर्भीं विहाय यद्यपि नान्ययोर्वृत्त्योर्नाम गृहीतं तथापि माधुर्यौजोव्यञ्जकानां वर्णानां निरूपणं कृतम् । एतेनानुमीयते यद्रीति विषये मम्मट-पण्डितराजयोर्मतैक्यमेवास्ते । मम्मटमते गुणानां रसमात्रधर्मत्वेन रीतीनां न साक्षाद् गुणयुक्तत्वम्, पण्डितराजमते रीत्याश्रयत्वमपि तेषामिति त्वन्यत् । पण्डितराजस्य गुणाभिव्यञ्जकवर्णनिरूपणं मम्मटस्य गुणाभिव्यञ्जकरीतिमनुहरति । रसगङ्गाधरे तत्परिष्कृतमिति त्वन्यत् ।

यथा—

"तत्र टवर्गवर्जितानां वर्णानां प्रथमतृतीयैः शर्भिरन्तस्थैश्च घटिता, नैकट्येन प्रयुक्तैरनुस्वारपरसवर्णैः शुद्धानुनासिकैश्च शोभिता, वक्ष्यमाणैः सामान्यतो विशेषतश्च निषिद्धैः संयोगाद्यैरचुम्बिता, अवृत्तिर्मध्यवृत्तिर्वा रचनानुपूर्व्यात्मिका माधुर्यस्य व्यञ्जिका ।"

"नैकट्येन द्वितीय-चतुर्थ-वर्गवर्ण-टवर्ग-जिह्वामूलीयोपध्मानीयविसर्ग-सकार-बहुलै वर्णै र्घटितो झग्रेफान्यतर-घटित-संयोग-परह्रस्वैश्च नैकट्येन प्रयुक्तैरालिङ्गितो दीर्घवृत्यात्मा गुम्फ ओजसः ।"

"श्रुतमात्रे वाक्यार्थं करतलव दरमिव निवेदयन्ती घटना प्रसादस्य ।" एवमवलोकनेन रीतिविषये काव्यप्रकाशकारसगङ्गाधरकारयोः साम्यमेव प्रतीयते ।

इत्थमस्मिन्न-ध्याये रस-ध्वनि-रीति-गुण-विषयेषु तुलना विहिता । अग्रिमेऽध्याये अलङ्कारविषये तुलना विधास्यते ।

## तृतीयोऽध्यायः

# अलंकार-विषये तुलना

काव्य-प्रकाशकाराः सह संसृष्टि-संकराभ्यामेकषष्टिमर्थालङ्कारान् प्राहुः । रस-गङ्गाधरे सप्ततिरर्थालङ्कारा लभ्यन्ते । यथा—उपमा, उपमेयोपमा, अनन्वयः, असमः, उदाहरणम्, स्मरणम्, रूपकम्, परिणामः, ससन्देहः, भ्रान्तिमान्, उल्लेखः, अपह्नुतिः उत्प्रेक्षा, अतिशयोक्तिः, तुल्ययोगिता, दीपकम्, प्रतिवस्तूपमा दृष्टान्तः, निदर्शना, व्यतिरेकः, सहोक्तिः, विनोक्तिः समासोक्तिः, परिकरः, श्लेषः, अप्रस्तुत प्रशंसा, पर्यायोक्तम्, व्याजस्तुतिः, आक्षेपः, विरोधः, विभावना, विशेषोक्तिः, असङ्गतिः, विषमम्, समम्; विचित्रम्, अधिकम्, अन्योन्यम्, विशेषः, व्याघातः, कारणमाला, एकावली, सारः, काव्य लिंगम्, अर्थान्तरन्यासः, अनुमानम्, यथासंख्यम्, पर्यायः, परिवृत्तिः, परिसंख्या, अर्थापत्तिः, विकल्पः, समुच्चयः, समाधिः, प्रत्यनीकम्, प्रतीपम्, प्रौढौक्तिः, ललितम्, प्रहर्षणम्, विषादनम्, उल्लासः, अवज्ञा, अनुज्ञा तिरस्कारः, लेशः, तद्गुणः, अतद्गुणः, मीलितम्, सामान्यम्, उत्तरम् । काव्य-प्रकाशोक्तानामर्थालङ्काराणां निम्नलिखितानि पद्यबद्धानि नामानि—

"उपमाऽनन्वयस्तदवदुपमेयोपमा ततः ।
उत्प्रेक्षा चापि संदेहो रूपकापह्नुती तथा ॥
श्लेषस्तथा समासोक्तिः प्रोक्ता चैव निदर्शना ।
अप्रस्तुतप्रशंसातिशयोक्ती परिकीर्तिते ॥
प्रतिवस्तूपमातद्वद्दृष्टान्तो दीपकं तथा ।
तुल्ययोगितका चैव व्यतिरेकः प्रकीर्तितः ॥
आक्षेपो विभावना च विशेषोक्ति स्तथैव च ।
यथासंख्यमर्थान्तरन्यासः स्यातां विरोधवत् ॥

स्वभावोक्तिस्तथा व्याजस्तुतिः प्रोक्ता सहोक्तिवत् ।
विनोक्ति-परिवृत्ती च समुच्चय उदीरितः ।
पर्यायश्चानुमानं च प्रोक्तः परिकरस्तथा ॥
व्याजोक्तिपरिसंख्ये च विज्ञेये हेतुमालया ।
अन्योन्यमुत्तरं सूक्ष्मसारौ तद्वदसंगतिः ॥
समाधिश्च समेन स्याद्विषमस्त्वधिकेन च ।
प्रत्यनीकं मीलितं च स्यातामेकावली स्मृता ॥
भ्रान्तिमांस्तु प्रतीपेन सामान्यञ्च विशेषवत् ।
तद्गुणातद्गुणौ चैव व्याघातः परिकीर्तितः ॥
संसृष्टिसंकरौ चैवमेकषष्टिरुदीरिताः ॥"[१]

इत्थं काव्यप्रकाश-रसगंगाधरयोर्लब्धानामलङ्काराणां नामान्युल्लिखितानि । तेषां लक्षणादिविषये तुलना विधीयते—

**उपमा :**

"साधर्म्यमुपमा भेदे" इति मम्मटः ।

"सादृश्यं सुन्दरं वाक्यार्थोपकारकमुपमालंकृतिः" इति पण्डितराजः । तत्र साधर्म्य-सादृश्यपदार्थौ भिन्नौ साधर्म्यसादृश्योरेकपदार्थत्वं वेति विचारणीयम् । उपमानोपमेययोर्भेदे सति साधर्म्यमुपमेति मम्मट-लक्षणनिष्कर्षः । अनन्वयेऽति व्याप्तिवारणाय भेदे इति पदम् । अतस्तत्रोपमानोपमेययोरैक्येन नोपमालक्षणातिप्रसंगः । समानस्तुल्यो गुणाक्रियादिरूपो धर्मो ययोरुपमानोपमेययोस्तौ सधर्माणौ । "धर्मादनिच् केवलात्"[२]इति पाणिनि सूत्रेणानिच् "समानस्य-च्छन्दस्यमूर्द्ध"[३] इत्यादिसूत्रेण च समान शब्दस्य सभावः । न चच्छन्दसि तद्विधायकेन सूत्रेण कथमत्र सभाव इति वाच्यम् । "समानस्य" इति योगविभागेन सभावस्यात्रापि सिद्धेः । इत्थं सभावसाधकं काशिकाकारमतम् । सिद्धान्तकौमुदीकारमते

१. का० प्रदी० ३०७-८ । पृ०
२. ५ ।४ ।१२४ पा० सू० ।
३. ६ ।३ ।८४ पा० सू० ।

"सधर्माणौ" इतिपदे सदृशवचनस्य सहशब्दस्य "वोपर्जनस्य" इति सूत्रेण सभावः। सधर्मणो र्भावः साधर्म्यम् "कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्येन" "इति नियमेन भावप्रत्ययान्तः साधर्म्यशब्द उपमानोपमेययोः समानधर्मेण सह सम्बन्धं वक्ति। अतो भेदे सति उपमानोपमेययोः समानधर्मेण सम्बन्ध उपमालंकार इति सूत्रार्थ आयाति। अतएव "समानेन धर्मेण सम्बन्ध उपमा" इति मम्मटेनापि कथितम्।"साधर्म्यमिति। साधारणधर्मवत्त्वमित्यर्थः" इत्युद्योत उक्तम्। साधारण-धर्मवत्त्वं च साधारण-धर्म-सम्बन्ध एव। तदुत्तरवर्तिभावप्रत्ययस्य त्वस्य प्रागुक्तरीत्या सम्बन्धाभिधायकत्वात्।

साधर्म्यमेव न सादृश्यम्। सादृश्यस्य साधर्म्य प्रयोजकत्वात्। प्रयोज्य-प्रयोजकयोर्भेदः स्फुटः। समान-धर्मप्रतियोगिकमुपमानोपमेयोभयानुयोगिकं साधर्म्यम्। सादृश्यं चोपमान-प्रतियोगिकमुपमेयानुयोगिकम्। अतएवोद्योते "सादृश्यं च समानधर्मसम्बन्ध-प्रयोज्यो धर्मविशेषः" इत्युक्तम्। तत्रैव च "सादृश्य प्रयोजक-साधारण-धर्मसम्बन्धो ह्युपमा सादृश्यं चातिरिक्तः पदार्थः "इति प्रोक्तम्।" नञिव युक्तमन्यसदृशाधिकरणे" इति परिभाषा-व्याख्यानावसरे गदाभिधानायां परिभाषेन्दुशेखरटीकायाम् "अत्र परिभाषायां सादृश्यं साधारणधर्म-सम्बन्ध- प्रयोज्यं सदृशादिपदशक्यतावच्छेदकतया सिद्धं सदृशदर्शने संस्कारोद्बोधकत्वस्य सर्वसम्मत्वेन तत्कारणताऽवच्छेदकतया च सिद्धमखण्डमतिरिक्तः पदार्थः, इति" इत्युक्तम्। लघुमञ्जूषायां धात्वर्थवादे नागेशभट्टेनापि प्रोक्तं यद् इवादिपदप्रयोगे साधारणधर्मसम्बन्धरूपोपमा शाब्दी सादृश्य-प्रतीतिश्चार्थी। इवादीनां साधारण-धर्मसम्बन्धरूपार्थनिरूपितवृत्तिकत्वात्। सदृश-तुल्यादि-पद-प्रयोगे साधारणधर्मसम्बन्धरूपोपमाऽऽर्थी सादृश्य-प्रतीतिश्च शाब्दी। सदृशादिपदानां सादृश्यशक्तत्वात्। न च सादृश्यस्य पदार्थान्तरत्वे गौतमकणादोक्त-पदार्थ-संख्याभेद इति वाच्यम्, गोतमोक्ते प्रमेयपदार्थे तस्यान्तर्भावात्। गोतमेन "संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम्" इति कथितम्। पदार्थगतसंख्यानियमस्यासिद्धिः कारणस्य प्रमाणस्यानुपपत्तेः, उपपत्तौ न तन्नियमः साधनस्य साध्यातिरेकादिति तत्सूत्रं व्याचक्षते व्याख्यातारः।

सादृश्यस्य पदार्थान्तरत्वादेव "अनेन अयं सदृशः" इत्युक्ते "केन धर्मेणानयोः सादृश्यम्" इति जिज्ञासोदेति, न तु 'कोऽनयोर्धर्म,' इति। सादृश्यसाधर्म्ययोः पार्थक्यादेव "उमानानि सामान्यवचने" इति सूत्रे भाष्ये "उभयोरुभयं वर्तते, सादृश्य-

मूलाभेदाध्यावसायेनोपमानस्योपमेयेऽभेदान्वयः" इति सिद्धान्ते "एवमपि सादृश्य-निमित्तं गुणो न निर्दिष्टः" इति शङ्का "श्यामत्वमेव गुणः" इति समाधानं च सङ्गच्छेते। उभयोः साधर्म्य सादृश्यचोरेकत्वेऽसङ्गतिः स्फुटैव। तयोर्भिन्नत्वपक्षे नासङ्गतिः। "किंधर्ममूलं सादृश्यमिति शङ्कायां "उपात्तधर्ममूलकमेव" इति उत्तरस्य चाशयः।"

तुल्ययोगितालंकारप्रकरणे पण्डितराजेनापि प्रोक्तम्—"औपम्यं चात्र गम्यम्, तत्प्रयोजकस्य समानधर्मस्योपादानात्। बाधकाभावाच्च। अतएव आलंकारिक्राणामपि सादृश्यं पदार्थान्तरं न तु साधारणधर्मरूपमिति विज्ञायते। अन्यथा औपम्यस्याऽत्र गम्यत्वोक्ते-रनुपपत्तेः"। अत्रोपमैव औपम्यम्। साधार्म्य-सादृश्ययोरैक्ये तुल्ययोगितामुपमाया व्यङ्ग्यत्वोक्तिर्विरुद्ध्येत। तत्र साधारण-धर्मस्योपादानात्। अतो सादृश्यं न गुण-क्रियादिरूपम्।

न च साधर्म्य-सादृश्ययोर्भिन्नत्वे "ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्" इत्युदाहरणस्थेन "काव्यस्य शशिना, अर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतम्" इति वृत्तिग्रन्थेन विरोधः, काव्यार्थयोरनुयोगित्वेन शशिरश्म्योश्च प्रतियोगित्वेन प्रतीत्योपमानप्रतियोगिताकोपमेयानुयोगिकस्य सम्बन्धस्य साधर्म्य पदार्थत्वादिति वाच्यम्, तेनवृत्तिग्रन्थेन "शशिसहितस्य काव्यस्य रश्मिसहितस्यार्थस्य च साधारण-धर्म-सम्बन्धरूपं साधर्म्यं कुत्रापि न प्रतीतम्" इत्यर्थस्य विवक्षितत्वात्। एवं सर्वत्र साधर्म्ये उपमानोपमेययोरनुयोगित्वमेव। साधर्म्य-सादृश्ययोर्भिन्नत्वे साधर्म्य-शक्तेवादिप्रयोग-स्थल उपमा शाब्दी सादृश्यशक्ततुल्यादिपदप्रयोग-स्थले सादृश्यस्य शाब्दत्वेनोपमाऽऽर्थीति उपमाविभाग उपपद्यते। न च "पूर्णा लुप्ता च" इति सूत्रे काव्यप्रकाशकृता "उपमा-प्रतिपादकानामुपादाने" इति कथितस्य वृत्तिग्रन्थस्य "हेत्वोरुक्तावनुक्तीनां त्रये साध्ये निवेदिते" इति सूत्रस्थ-साम्य पद-व्याख्यानभूतेन "उपमानोपमेयाभावे" इति वृत्तिग्रन्थेन च विरोधः, आभ्यामिव तुल्यादि-शब्दानां एकत्रो-पमाप्रतिपादकत्वस्य अन्यत्र च सादृश्य-प्रतिपादकत्व-स्योक्तत्वाद् इति वाच्यम्।" उपमानोपमेयभावे" इत्यस्य "उपमानोपमेय-भावप्र-योजके साधारण-धर्म-सम्बन्धे" इति व्याख्यानेनादोषात्।

न च उपमानोपमेययोः सम्बन्ध एव कथं न साधर्म्यपदार्थ इति वाच्यम्। "समानेन धर्मेण सम्बन्धः" इत्यादि काव्यप्रकाशग्रन्थेनान्यैश्चोद्योतादिग्रन्थै र्विरोधात्। तस्मात् सादृश्यप्रयोजक-साधारण धर्मसम्बन्ध एवोपमा। साधर्म्यपदमत्रा-रोपितानारोपितसाधारणधर्म-सम्बन्धपरमिति काव्यप्रदीप उक्तम्।

आरोपितसाधर्म्य-मूलकानन्वयालंकारेऽतिव्याप्तिवारणाय "भेदे" इति पदोपादानं लक्षणे। सादृश्यमालंकारि कानामपि पदार्थान्तरमिति प्रागुक्तम्।

"द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाभावा: सप्तैव पदार्था:" इति स्वसिद्धान्तभङ्गं मन्यमाना नव्यास्तार्किका: साधारण-धर्म-रूपमेव सादृश्यमिति मन्यन्ते। तच्च सादृश्यं तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। उपमानभिन्नत्वे सति उपमानगत भूयोधर्मवत्त्वं सादृश्यमिति तदर्थ:। यथा चन्द्रवन्मुखमित्यत्र चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे सादृश्यम्। चन्द्रेऽतिव्याप्तिवारणाय तद्भिन्नत्वे सतीति कथनम्। धर्मवत्त्वं च धर्म एव। तस्य धर्मस्य गुणत्वे गुणे क्रियात्वे च कर्मणि अन्तर्भाव इति नाष्टम-पदार्थापत्ति:।

वस्तुतस्तद्गतभूयोधर्मवत्त्व-शब्दस्य "भूयांसो धर्मा:" इत्यर्थकरणं विरुद्धम्। मतुबन्त-तद्गतभूयोधर्मवच्छब्दाद् विहितस्य भावप्रत्ययस्य त्वस्य "कृत्तद्धितसमासेभ्य: सम्बन्धाभिधानं भावप्रत्ययेन" इति सिद्धान्तेन तद्गतभूयोधर्मसम्बन्धस्यैव वाच्यत्वात्। तस्मात् सादृश्यं पदार्थान्तरमेव। तच्चोपमानप्रतियोगिकमुपमेयानुयोगिकम्। साधर्म्यञ्चोपमानोपमेयोभयानुयोगिक साधारणधर्म- सम्बन्ध-रूपम्। इत्थं झलकी करवामनाचार्यादीनां मतम्।[1]

दामोदरात्मजेन रघुनाथपण्डितेन समानधर्मसम्बन्ध-निबन्धन उपमान-प्रतियोगिक: उपमेयानुयोगिक: सम्बन्ध एव साधर्म्य-पदार्थ उक्त:, खण्डितश्च वामनाचार्योक्त: प्राक् कथित: साधर्म्यपदार्थ:। अस्यमतमधस्ताद् निर्दिश्यते—

"वस्तुस्तु सर्वमेतद्व्याख्यानं साधर्म्यपदस्वारस्यानाकलननिबन्धनमेव। साधर्म्यं तु समानधर्मान्वयनिरूपित:, उपमेयानुयोगिक: उपमानप्रतियोगिक:, उपमानोपमेययोरेव मिथ: सम्बन्ध एव न तु महता स्थानप्रबन्धेन टीकाकारेण द्वितीयावृत्तौ प्रतिपादित:, उपमानोपमेयोभयानुयोगिक: समानधर्मप्रतियोगिक: सम्बन्ध:। एतादृशोर्धर्मधर्मिणों: सम्बन्ध: समावाय एव। स तु साधर्म्याख्य-सम्बन्धो न कदापि भवितुमर्हति। यथा चायमुपमानोपमेययोरेव मिथ: साधर्म्याख्य-सम्बन्धस्तथैव सर्वैरलंकारनिबन्धकृद्भि: सर्वैरलंकार-व्याख्याकृद्भिश्च परिगृहीत:। भट्टवामनाचार्येणापि स्वकृतबालबोधिन्यां प्रथमावृत्तौ तथैव व्याख्यात:। साधर्म्याख्य:, उपमानोपमेययोरेव मिथ: सम्बन्ध एव ग्रन्थकृन्मम्मटाचार्यसम्मत इति निर्विवादमेव।

---

१. का० प्र० वा० टी०, ५४०-४३ पृ०

"ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्" इत्यत्रोपमादोषनिरूपणावसरे "अत्र काव्यस्य शशिना अर्थानां च रश्मिभिः साधर्म्यं न प्रतीतमित्यनुचितार्थत्वम्।" इतिवृत्ति-ग्रन्थेन ग्रन्थकृता कण्ठरवेण व्याख्या तत्वात्। तथा च "उपमानोपमेययोरेव साधर्म्यं भवतीति तयोरेव समानेन धर्मेण सम्बन्ध उपमा" इति वृत्ति ग्रन्थेन। ननु साधर्म्यस्य प्रतियोग्यनुयोगिनिरूप्यतया तदनभिधाने न्यूनत्वं लक्षण-वाक्यस्येति चेन्न। आक्षेपादुपमानोपमेययो स्तयोर्लाभात्, इति प्रदीपकार-निःसंदेहव्याख्यानेन च सम्बन्धस्य प्रतियोग्यनुयोगिनोश्च निश्चितत्वेन स्फुटं प्रतिपन्नत्वात्। न चात्र काव्यस्य शशिना सह, अर्थानां च रश्मिभिः सह समानेन धर्मेण सहेति सर्वत्र सहपद-प्रक्षेपपूर्वकं व्याख्यानमुचितम्। तथा सति तत्र तत्र वृत्तिग्रन्थकृदेव तथैवावक्ष्यत्। इत्थं मम्मटस्योपमालक्षण उपात्तं साधर्म्यपदमुपमानप्रतियोगिकोपमेयानुयोगिक-सम्बन्धपरमिति सिद्ध्यति।

पण्डितराजमते सादृश्यमुपमा। सदृशयोर्भावः सादृश्यम्। तच्च साधारणधर्मसम्बन्धनिबन्धन उपमानोपमेय-सम्बन्धः। सादृश्यं पदार्थान्तरमेवेति प्रागुक्तम्। न तु गुणक्रियादिधर्मरूपम्। सुन्दरमेव सादृश्यमुपमा। तस्मिन् सौन्दर्यञ्च चमत्कृत्या-धायकत्वम्। सुन्दरपदोपादानादेवानन्वयव्यतिरेकाभेदप्रधानरूपकापह्नुतिपरिणामादिषु विद्यमान-सादृश्येषु अपि सादृश्यस्याचमत्कारितया नोपमालक्षणातिप्रसंगः। न च "मुखमिव चन्द्रः" इत्यत्र "आक्षेप उपमानस्य प्रतीपमुपमेयता" इतिलक्षणे प्रतीपालङ्कारे "चन्द्र इव मुखं मुखमिव चन्द्र" इत्यत्र "विपर्यास उपमेयोपमा मता" इति लक्षणयामुपमेयोपमायाञ्च सादृश्यस्य सुन्दरत्वेनोपमालक्षणातिप्रसंग इति वाच्यम्। तयोः प्रतीपोपमेयोपमयोरुपमात्वस्येष्टत्वात्। सादृश्यपदेन कल्पिताऽसत्सादृश्यस्यापि ग्रहणम्। तेन "त्वयि कोपो ममाभाति सुधांशाविव पावकः" इत्यादौ नोपमालक्षणाव्याप्तिः।

एवमेव—

> "स्तनाभोगे पतन्भाति कपोलात् कुटिलोऽलकः।
> शशांकबिम्बतो मेरौ लम्बमान इवोरगः"

इत्यादावपि उपमैव। इत्थं पण्डितराजः प्रतीपमुपमेयोपमाञ्चोपमायामेव गतार्थयामासं। मम्मटमते पृथगेतावलंकारौ। उभयोर्मते उपमान-प्रतियोगिकः उपमेयानुयोगिकः सम्बन्ध उपमा। वामनाचार्यस्य साधर्म्यपदव्याख्यामादायोभयलक्षणयोर्भेद इति स्फुटमेव।

**मम्मटोपमालक्षण आक्षेप :—**

"साधर्म्यमुपमा भेदे" इतिकाव्यप्रकाशस्योपमालक्षणं न निर्दुष्टम् । "गोसदृशो गवय:" इत्यादावचमत्कारि-सादृश्यवति लौकिक-वाक्ये व्यतिरेके निषेध-प्रतियोगिनि सादृश्ये चातिव्याप्ते: । न च साधर्म्य-पदेन सुन्दरं साधर्म्यं विवक्षितमतो लौकिके प्रागुक्ते वाक्ये स्वरूपतोऽनवस्थितेऽचमत्कारिणि सादृश्ये च नातिव्याप्तिरिति वाच्यम् । तथात्वे व्यतिरिकेऽतिप्रसंगवारणस्य स्वत: सिद्धत्वेनापर्यवसित-सादृश्येऽनन्वयेऽपि तस्य स्वत: सम्भवेनान्वये तद्वारणायोपात्तस्य भेदे इति पदस्यानर्थक्यात् । किञ्च काव्यालंकारप्रस्तावे वाच्य-व्यङ्ग्योपमासामान्य-लक्षणकरणस्य नोचितत्वम् । इत्थमाह पण्डितराज: । अस्य लक्षणस्य व्यङ्ग्योपमायां । नातिव्याप्ति: "वाक्यार्थोपस्कारकम्" इति सादृश्यविशेषणस्योक्तत्वात् व्यङ्ग्योपमा नालंकारोपितु अलंकार्या । अलंकारत्वव्यवहारस्तु ब्राह्मणश्रमणन्यायेनेति प्रागुक्तम् ।

**समीक्षा :—**

उभयनये साधर्म्यं सादृश्यापरपर्यायमुपमा । मम्मटमतेऽपि सुन्दरस्यैव सादृश्यस्योपमात्वम् । मम्मटस्य वाच्यव्यङ्ग्यसाधारणमेवोपलक्षणं कृतम् । पण्डितराजेन च वाच्योपमालंकृतिर्लक्षिता । अस्य मते प्रतीपस्योपमेयोपमायाश्चालंकारयोर्नोपमात: पृथग्भाव: । मम्मटस्यैतावलङ्कारौ पृथगिति । अनयोरलंकारयोरुपमायामन्तर्भाव उचितो न वेति विचारणीयमास्ते । नागेशभट्टो मम्मटमतमेव समर्थयति ।[१] उपमायां चन्द्राद्युमान-प्रतियोगिकत्व-सादृश्यानुयोगिकत्वबुद्धिकृतश्चमत्कार: । उपमेयोपमायां "चन्द्र इव मुखं मुखमिव चन्द्र:" इत्यादौ तृतीय सदृशव्यवच्छेदकृत एव चमत्कार:, न तु चन्द्र-मुखयो: परस्परं सादृश्यबुद्धिकृत: । "मुखमिव चन्द्र:" इत्यादौ प्रतीपे मुखादौ सादृश्यप्रतियोगित्व-धीकृत एव चमत्कार: । न तु सादृश्यधीकृत: । अत्र मुखादीनां नानुयोगित्वेन भानम् । अलंकारभेदे चमत्कार-कारणभेद एव हेतु: । अतोऽनयोरलंकारयोरुपमात: पृथगेव गणना समुचिता ।

---

१. गु० म० प्र० २०५ पृ०

झलकीकरवामनाचार्यमते साधारण-धर्मप्रतियोगिक उपमानोपमेयोभयानुयोगिकः सम्बन्ध एव साधर्म्यपदवाच्य उपमा। अतः पण्डितराजस्य मम्मटस्य चोपमालक्षणं भिन्नमिति प्रतीयते। सादृश्यमेवोपमा पण्डितराजस्येति प्रागावेदितम्। साधर्म्य-सादृश्ययोरैक्ये कथमुपमाया "इवादिस्थले शाब्दी च आर्थी च सदृशादिपदस्थले" इति द्वौ भेदौ सङ्गताविति चिन्तनीयम् ।अर्थात् सादृश्यशक्तेवादिस्थले सादृश्यरूपोपामाया शब्दोपात्तत्वात् सादृश्यशक्ततुल्यादिप्रयोगे सदृशस्यैव शाब्दतया तस्या अर्थलभ्यत्वा न्नैतद्व्यवस्थोच्छेद इति ज्ञेयम्।

**उपमा-भेदाः—**

उपमा द्विधा पूर्णा लुप्ता च। उपमानोपमेयसाधारणधर्मोपमावाचकशब्दानां यत्रोपादानं तत्राद्या। यत्रैषां मध्य एकस्याप्यनुपादानं तत्राऽपरा। आद्या पुनर्द्विविधा श्रौती आर्थी च। "तत्र तस्येव" इति सूत्रविहित-वतेरिवादिशब्दानामुपमाप्रतिपादकानां च स्थले प्रथमा। "तेन तुल्यं क्रिया चेद्वतिः" इतिसूत्र-विहितवतेस्तुल्यादि शब्दानां चोपमाप्रतिपादकानां स्थले द्वितीया। इमे श्रौत्यार्थी पुनर्वाक्य-समासतद्धित-गामितया षोढा भवतः। एवं षट् पूर्णाभेदाः। लुप्ता च प्रथमं सप्तधा-उपमानलुप्ता, धर्मलुप्ता, वाचकलुप्ता धर्मोपमानलुप्ता, वाचक-धर्मलुप्ता, वाचकोपमेयलुप्ता धर्मोपमानवाचकलुप्ता च। अन्त्यैव त्रिलोपा कथ्यते। तत्रोपमानलुप्ता द्विधा-वाक्यगता समासगता च। धर्मलुप्ता पञ्चविधा समासगा श्रौती, समासगार्थी, वाक्यगा श्रौती वाक्यगार्थी तद्धितगार्थी च। वाचकलुप्ता षोढा समासगा, कर्मक्यज्गा, आधारक्यज्गा, क्यङ्गा, कर्मणमुल्गा, कर्तृणमुल्गा च। धर्मोपमानलुप्ता द्विधा-वाक्यगा समासगा च। वाचकधर्मलुप्तापि तथा क्विब्गता समासगता च। वाचकोपमेयलुप्ता एकमेव। अन्त्या लुप्तापि तथा। इति संकलनया लुप्तोपमाया ऊनविंशतिर्भेदाः प्रागुक्त पूर्णाभेदैः सहोपमायाः पञ्चविंशतिर्भेदाः काव्यप्रकाश उपलभ्यन्ते।

रसगङ्गाधरे पञ्चविंशतेरतिरिक्ता अपि भेदाः प्रदर्शिताः। तथाहि वाचकलुप्तायाः षोढा प्रागुक्तास्तस्या अन्येऽपि त्रयो भेदा भवन्ति। "कर्तर्युपमाने इति सूत्र विहितस्य णिनेः स्थले" कोकिलालापिनी "इत्यादौ प्रथमा।" "इवे प्रतिकृतौ" इति सूत्रेण विहितस्य कनः "लुम्मनुष्ये" इत्यनेन लोपस्य स्थले "चञ्चा पुरुषः सोऽयं यः स्वहितं नैव जानीते" इत्यादौ द्वितीया। "सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः" इति वार्तिकेन विहितस्याचारार्थकस्य क्विपः स्थले" आह्लादि वदनं तस्याः शरद्रा-

कामृगाङ्कति" इत्यादौ तृतीया। इत्थं साकल्येन वाचक-लुप्ताया नव भेदाः। प्रागुक्तोपमानलुप्ताया भेदव्यतिरिक्तस्तृतीयोऽपि भेदो दृश्यते तद्धितगतः। यथा—

"यच्चोराणामस्य च समागमो यच्चतैर्बधोऽस्य कृतः।

उपनतमेतदकस्मादासीत् तत्काकातालीयम्।"

अत्र लक्षणया काकागमनतालपतनरूपार्थबोधकयोः काकतालशब्दयोः "समासाच्च तद्विषयात्" इति ज्ञापकादिवार्थे समासे काकतालमिति शब्दः सिद्ध्यति। अस्यार्थश्च काकतालसमागमसदृशोऽस्य चौराणाञ्च समागमः। तदनन्तरं काकतालमिवेति द्वितीयेवार्थे तेनैव सूत्रेण प्रत्यये तालपतन-जन्यकाकवधसदृशश्चोरकर्तृकोऽस्य बध इति काकतालीयशब्दार्थः। अत्र तालपतनजन्यकाकं बधरूपस्योपमानस्यानुपादानेन तद्धित-प्रत्ययार्थ-गतोपमानलुप्ता। लुप्ताया वाचकोपमानलुप्ता अपि भेदो भवति। स भेदोऽप्यत्र काकतालमिति छप्रत्यप्रकृतिभागस्यार्थे। अत्र ह्युपमानं काकतालसमागमो न शब्दोपात्तः। वाचकस्येवादेरभावोऽपि विद्यते। अतः प्रकृतिभागे वाचकोपमानलुप्ता। प्रागुक्तधर्मोपमानलुप्ताया अपरोऽपि तृतीय-चरणोक्त-धर्मनिरासे प्रत्ययगो भेदः सिद्ध्यति। वाचकधर्मलुप्ता कन्रूपतद्धित-प्रत्ययगापि भवति। यथा—"चञ्चापुरुषः सोऽयं योऽत्यन्तं विषयवासनाधीनः" इत्यादौ। अत्र स्वहिताकरणरूपस्य धर्मस्य वाचकस्य कनश्च "लुम्मनुष्ये" इति सूत्रेण लोपः। एवं काव्यप्रकाशातिरिक्ता लुप्तोमायाः सप्त अपरे भेदाः सिद्धाः। एवं समेषां प्रागुक्तानां भेदानां सप्तभिर्भेदैः सह योगे द्वात्रिंशद्भेदा उपमायाः।

एवम्प्रभेदोपमा प्रधानव्यंग्यानां वस्त्वलंकार-रसरूपाणां वाच्ययो र्वस्त्वलंकारयोश्च उपस्कारकत्वेन पुनः पञ्चधा। अतो मम्मटनयेऽस्याः सपादशतं भेदाः। द्वात्रिंशद्भेदवादिनां मते च षष्ट्युत्तरं शतं भेदाः। इतोऽन्येऽपि भेदा भवितुमर्हन्ति।

उपमायां साधारणधर्माः षोढा भवान्ति अनुगामी, बिम्बप्रतिबिम्बभावापन्नः, अनुगामि-बिम्बप्रतिबिम्बभावापन्नः, वस्तु-प्रतिवस्तुभावविशिष्ट-बिम्बप्रतिबिम्बभावापन्नः, असन्नप्युचरितः केवलशब्दात्मकश्च। तृतीयोऽपि त्रिधा विशेषणमात्रयोर्विशेष्यमात्रयोरुभयोर्वा वस्तु-प्रतिवस्तुभावेन करम्बितः। एभिः साधारण धर्मभेदैः सधर्माणां भेदानां यथासम्भवं गुणने नाना भेदा भवन्ति। अयं धर्मः क्वचिद्वाच्यः, क्वचिद् व्यङ्ग्यः क्वचिल्लक्ष्यश्चं भवति। अस्य बाच्यतायां

धर्मलुप्तातिरिक्ताः सर्वा उपमाः । व्यङ्ग्यतायाञ्च धर्मलुप्ता । लक्ष्यतायां च पृथगेव भेद इति पण्डितराजः । अस्य लक्ष्यतायामिदं पद्यमुक्तम्—

"सर्प इव शान्तमूर्तिः श्वेवायं मानपरिपूर्णः ।
क्षीब इव सावधानो मर्कट इव निष्क्रियो नितराम् ॥"

अत्र शान्त-मूर्ति मानपरिपूर्ण सावधान-निष्क्रियशब्दैः अशान्तमूर्तित्वमानरहितत्वानं वधानत्व-चञ्चलत्व रूपा धर्मा लक्ष्यन्ते । धर्मस्य लक्ष्यतायामपि न लुप्तत्व-व्यवहारोऽभिमतः पण्डितराजस्येति प्रतीयते ।

पुनरुपमा प्रकारान्तरेणाष्टधा केवलनिरवयवा, मालारूपनिरवयवा, समस्त-वस्तु-विषयसावयवा, एकदेशविवर्तिसावयवा, केवलश्लिष्टपरम्परिता, मालारूप-श्लिष्टपरम्परिता, केवलशुद्धपरम्परिता, मालारूपशुद्धपरम्परिता च । इत्थमुपमाया नाना भेदा भवितुमर्हन्ति ।

कर्माधारोत्पन्नक्यचः कर्तुत्पन्नस्य क्यङः स्थले वाचकलुप्तोदाहरणस्यालो-चना :

"उपमानादाचारे" इति सूत्रेण "अधिकरणाच्चेति वक्तव्यम्" इति वार्तिकेन च कर्मणोऽधिकरणाच्चोपमानादाचारार्थे क्यच् "कर्तुः क्यङ् सलोपश्च" इति सूत्रेण च कर्तुरुपमानात्तस्मिन्नेवार्थे क्यङ् प्रत्ययौ विधीयेते । एतादृशस्थले मम्मटेन वाचक-लुप्तोपमा कथिता ।[1] आचारस्य साधारण-धर्मस्य प्रत्ययोपात्तत्वेन न तस्य लोपः, इवादीनामुपमावाचकानामभावेन वाचक-लुप्तैव । यथा—

"पौरं सुतीयति जनं समरान्तरेऽसा-
वन्तःपुरीयति विचित्रचरित्रचुञ्चुः ।
नारीयते समरसीम्नि कृपाणपाणे-
रालोक्य तस्य चरितानि सपत्नसेना ॥"

इत्यत्र पद्ये विद्यमानेषु सुतीयति-पुरीयति-नारीयतेपदेषु क्रमशः कर्मणोऽधिक-रणाच्चक्यच्, कर्तुः क्यङ् च । सुतरूपकर्मणोऽन्तःपुररूपाधिकरणाच्च विहितस्य क्यचः, नारीरूपकर्तुरुपमानाद् विहितस्य क्यङश्चाचारः प्रतिपाद्यः ।

---

१. वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि । —का० प्र० १३० सू० ।

रसगंगाधकार एतादृशस्थले धर्मलोपमपि मन्यते। न चाचारस्य धर्मस्य प्रत्ययोपात्तत्वेन तल्लोपवचनमसङ्गतमिति वाच्यम्। धर्ममात्ररूपस्याचारस्योपमा-प्रयोजकत्वाभावात्। यत्किञ्चिद्धर्म रूपस्य आचारस्य सत्त्वेन साधारण धर्मसद्भावं संसाध्य धर्मलुप्तात्वाऽभावो न साधयितुं शक्यते। "नारीयते सपत्नसेना" इत्यादौ व्यञ्जनया प्रतिपादितैः कातरत्वादिधर्मैरभिन्नतयाध्यवसितस्यैवाचारस्योपमानिष्पा-दकत्वम्। यदि यत्किञ्चिद्धर्मरूपस्याचारस्य उपमानिष्पादकत्वं स्यात् तर्हि "त्रिवि-ष्टपं तत्खलु भारतायते" इत्यत्र सुप्रसिद्धत्वादिधर्मरूपस्याचारस्य सत्त्वेनोपमानिष्पत्तिः स्यात्। सा च न दृश्यते। तादृशाचारमूलोपमाया श्चमत्कारा-जननात्। अतः "सुपर्वभिः शोभितमन्तराश्रितैः" इति चरणान्तरनिर्माण एव अन्त-राश्रित-सुपर्वशोभितरूपशब्दात्मक-साधारण-धर्ममादायैव तत्रोपमानिष्पत्तिः। उपमा-प्रयोजक-साधारण-धर्मवाचक-शून्य-स्थल एव धर्मलुप्तात्वव्यव-हारः।क्यचः क्यङश्च स्थले न तादृश धर्मसद्भाव इति तत्र वाचक-धर्मोभय लुप्ता उपमा वाच्या, न तु वाचकलुप्तामात्रम्। यत्किञ्चिद्धर्मस्योपमा-प्रयोजकत्वे "मुखरू-पमिदं वस्तु प्रफुल्लमिव पंकजम्" इत्यत्र पूर्णोपमापत्तिः। वस्तुत्वस्य साधारणध-र्मस्य सत्त्वात्। प्रफुल्लत्वमादाय पूर्णोपमा भवति नाम। नहि अत्र वस्तुत्वस्य धर्मस्योपमा-प्रयोजकत्वम्।

**उपमेयोपमा :—**

तृतीय-सदृश-व्यवच्छेदफलकवर्णनविषयीभूत-परस्परोपमानोपमेयभावाप न्नार्थद्वय-सुन्दरसादृश्यरूपोपमेयोपमा उपमाया एवभेदः, नत्वलंकारान्तरमिति पण्डितराजः। अतएव "अथास्या एव भेद उपमेयोपमा निरूप्यते "इति तेनोक्तम्। अलंकारान्तरमेवेति काव्यप्रकाशकृदिति प्रागावेदितम्। युक्तायुक्तत्वे प्रागे-वोक्ते।

**अनन्वयः—**

एतद्विषय उभयोः साम्यमेव। एकस्यैवैकवाक्यगत उपमानान्तरव्यवच्छेदफ-लकवर्णन-विषयीभूत उपमानोपमेयभावोऽनन्वयः।"[१] देवी गङ्गा तु गङ्गेव" इत्या-द्युदाहरणम्। रसगङ्गाधरे अनन्वस्योपमावदन्येऽपि भेदाः प्रदर्शिताः।

---

१. उपमानोपमेयत्वे, एकस्यैवैकवाक्यगे। अनन्वयः। का० प्र० १३५ सू०। "द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतं यदेकोपमानोपमेयकं सादृश्यं तदन्वयः।"—र० गं० २ आनने।

**असम :**

सर्वथैवोपमानिषेधोऽसमाख्योऽलंकार इति पण्डितराजः। अनन्वये व्यङ्ग्योऽयमलङ्कार-पदव्यपदेशभाङ्न भवति। रूपकदीपकादौ व्यज्यमानाया उपमाया इव तत्रानन्वयेऽस्यापि चमत्काराऽननुगुणत्वात्। वाच्यतादशायामेव सर्वथोपमानिषेधरूपोऽयमलंकारः। सादृश्यस्य सर्वथानिषधेन नात्रोपमा-गन्धोऽपि। उदाहरणं यथा—

"भुवन-त्रितयेऽपि मानवैः
परिपूर्णे विबुधैश्च दानवैः।
न भविष्यति नास्ति नाभवन्
नृप यस्ते भजते तुलापदम्।"

अत्र वर्णनीयस्य नृपस्य सर्वथोपमानिषेधः। स च राजस्तुत्युत्कर्षकत्वादलंकारः। न चानन्वयस्थले सर्वथोपमानिषेधस्याऽसमस्य ध्वनित्वेन, तैनैव चमत्कारोपपत्तावनन्वस्यस्य पृथगलंकारता विरुद्धेति वाच्यम्। दीपकादावपि उपमाभिव्यक्त्यैव चमत्कारोपपत्तौ पृथगलंकारताविरुद्धेति वाच्यम्। दीपकादावपि उपमाभिव्यक्त्यैव चमत्कारोपपत्तौ पृथगलंकारतावचनस्यानुचितत्वात्। न च दीपकादिस्थल उपमाया व्यज्यमानत्वेऽपि गुणीभावेनानन्वये च स्वरूपेऽनवतिष्ठमानस्य सादृश्यस्य तिरस्कारेण असमस्य ध्वन्यमानस्य गुणीभावाभावेन वैषम्यमिति वाच्यम्। दीपकसमासोक्त्यादिषु व्यङ्ग्यस्य गुणीभावेऽपि अलङ्कारत्वस्याक्षतेरिवानन्वयेपि प्रधानासमस्य व्यज्यमानत्वेऽपि अलंकारत्वस्याक्षतेः। न च प्रधानव्यङ्ग्यस्थले ध्वनित्वेनैव व्यवहार इति अनन्वयेऽसमस्य प्राधान्येन ध्वन्यमानत्वेनासमालंकारध्वनिरित्येष व्यवहारोऽस्तु न त्वनन्वय-व्यवहार इति वाच्यम्। यतः "त्वमिव जननि त्वं विजय से"इति पद्ये गङ्गागतरतेरेव चरमव्यगङ्यतया तदुपकारकत्वेनाऽसमस्यालंकारत्वमविरुद्धम्। नहि अलंकारत्वस्य व्यङ्ग्यत्वस्य च मिथो विरोधः। वाच्य-स्वसादृश्यमात्रमेवानन्वयशरीरम्। न च ध्वनित्वालंकारत्वयोर्विरोध इति वाच्यम्। पर्यायोक्त-सादृश्यमूलाप्रस्तुतप्रशंसादौ ध्वनित्वालंकारत्वयोः प्रसिद्धेः। ध्वनिकारेणापि सादृश्यमूलायामप्रस्तुतप्रशंसायां पर्यायोक्ते च प्रधान व्यङ्ग्ये ध्वनित्वमलंकारत्वं च स्वीकृतम्।

इत्थं रसगङ्गाधरेऽसमाभिधानमलंकारान्तरं साधितम् । काव्यप्रकाशेऽयं नोपलभ्यते । मम्मटमते कस्मिन्नलंकारेऽस्य प्रवेश इति विचारणीयमास्ते । एतदलंकारविषये मनीषिणां नाना विचाराः सन्ति। यथा कुतश्चिदङ्गाद्भूषणापसारणं चमत्काराय भवति । नहि भूषणाभावोऽलङ्कारः । तथा सर्वथोपमा-निषेधश्चमत्कारमावहन् न पृथगलंकारव्यपदेशभाग् । "त्वं सर्वेभ्य उत्कृष्टगुणोऽसि" इति ध्वननेना समालंकारोदाहरणे व्यतिरेक ध्वनिः । अतो व्यतिरेकध्वनावेवास्यान्तर्भाव इति केचित् । इत्थं पूर्वोत्तरपक्षयोर्नानाविचारा उद्योते कृताः ।[१] अनन्वयस्य पृथगलंकारत्वं च तत्र साधितम्। "ढुण्ढुलन्तो मरीहसि" इत्यादौ मा भूदसमोलङ्कारो रत्नाकरोक्तः, तत्र सर्वथोपमानिषेधाभावात् । किन्तु तत्रोपमानलुप्तैव । पण्डितराजोक्त उदाहारणेऽसमालंकारोऽक्षत एवेति मन्मतिः । अतएव "तच्चिन्त्यम्" इत्युद्योतवचनेनासमालंकारस्य व्यतिरेकध्वनावन्तर्भावेऽरुचिः सूचिता ।

**उदाहरणम्ः—**

उदाहरणालंकारो रसगङ्गाधरे निरूपितः । स च सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोः सामान्य-विशेषयोरुच्यमानोऽवयवावय विभावः । यथा—

"अमित गुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।
निखिलरसायनराजो गन्धेनोग्रेण लशुन इव ॥"

अत्र पद्ये पूर्वार्द्धे "गुणबाहुल्यवानपि पदार्थः केनचिद् दोषविशेषेण निन्दितोभवति" इति सामान्य पदार्थो निरूपितः । "कथं दोषविशेषेण निन्दितो भवति तादृशः

---

१. ननु भुवनत्रितयेऽपि-भजते तुलापदम् "इत्यादौ सर्वथैवोपमानिषेधात्मकोसमालंकारः प्राचीनैरुक्तः। उपमानलुप्तायामतिव्याप्तिवारणाय सर्वथैवेति। एवं च तद्ध्वनिनैव चमत्कारोत्पत्तौ, अनन्वयस्य पृथगलंकारत्वं किमर्थम्? यदि तु रत्यनुकूलतया कुतश्चिदङ्गाद् भूषणापसारणं यथा चमत्काराय तथा प्रकृते,उपमालंकाराभाववर्णनमेव चमत्काराय न तु तत्रासमन्नामा पृथगलंकार इत्युच्यते तर्हि तद्ध्वनिनैवोत्पत्तिरिति चेत्, न। पर्यायोक्तसादृश्यमूलाप्रस्तुतप्रशंसादौ ध्वन्यमानार्थ-सत्त्वेऽपि वाच्यार्थकृत-चमत्कारमादायाऽलंकारत्ववदुपपत्तेः। अन्यथादीपकादावपि, उपमाभिव्यक्त्यैव चमत्कारोत्पत्तौ तेषामपि पृथगलंकारत्वं न स्यादित्याहुः। केचित्तु सर्वेभ्य उत्कृष्ट गुणस्त्वमिति प्रतीतेर्व्यतिरेकालंकारध्वनिरेवात्रेति वदन्ति तच्चिन्त्यम्। —का० प्र० वा० टी० ५८३ पृ० "

पदार्थ" इति प्रश्नस्य स्फुटोत्तरार्थमुत्तरार्द्धे तादृशसामान्यपदार्थैकदेशो विशेषो तीक्ष्णगन्धो लशुनरूपो निन्दित: पदार्थो निरूपित: । अनयो: सामान्यविशेषभूतयो: पदार्थयोरवयवावयविभावोऽत्र इव पदेनोक्त: । अत उदाहरणालंकार: । न चानयोरुपमैवेति वाच्यम् । "विशेष: सामान्यान्नातिरिच्यते" इति सिद्धान्तेन सामान्यविशेषयोरभेदेन भेदघटितस्य सादृश्यस्यानुल्लासात् । यद्यत्रापि सादृश्यमुलसेत्तर्हि इवादिवत् सदृशादिपदानामपि प्रयोग: स्यात् । सदृशादिप्रयोगोऽनुपपन्न एव । अत एतादृशस्थल उदाहरणाख्यमलंकारान्तरमेव । न चात्रार्थान्तरन्यास इति वाच्यम् । इह सामान्यविशेषयोरखयवावयविभावस्य सम्बन्धस्य इव-यथानिदर्शन-दृष्टान्तादिशब्दैरुच्यमानत्वात्, अर्थान्तरन्यासे च तस्य सम्बन्धस्य तथात्वाभावात् । न च इवयथाशब्दयो: सादृश्यवाचकयोरवयवावयविभावे वृत्तिर्नास्ति, इति वाच्यम् । लक्षणया तयोस्तादृशसम्बन्ध-बोधकत्वे विरोधाभावात् । इव-यथाशब्दप्रयोगे सामान्यार्थस्य प्राधान्यम् । निदर्शनादिशब्दप्रयोगे विशेषार्थस्य तद् वाक्यभेदश्च । एवम्—

"अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुण-सन्निपाते
निमज्जतीन्दो: किरणेष्विवाङ्क: ।"

इतिकालिदासीयपद्य उदाहरणमेवालंकार: । गुणसमूहनिपतितस्यैकस्य दोषस्य निमज्जनमिति सामान्यपदार्थस्य आह्लादकत्वादिनानागुणवति चन्द्रकिरणौघेङ्क-निमज्जनस्य च विशेषपदार्थस्यावयवावयविभावस्य इवेन प्रतिपाद्यमानत्वात् ।

काव्यप्रकाशेऽस्यालंकारस्य नामापि नाकर्ण्यते । मम्मटमतेऽस्यालंकारस्यार्थान्तरन्यास उपमायां वान्तर्भाव: । काव्यप्रकाशटीकाकारै: "उपकारमेव" इति पद्यं पण्डितराजमत उदाहरणोदाहरणमर्थान्तरन्यास एवान्तर्भावितम् । कैश्चिदुपमायामयमलंकारोऽन्तर्भावित: ।[१] प्राचामस्यालंकारस्याऽस्वीकारे बीजम् उपमायामन्त-

१. ननु "उपकारमेव तनुते विपद्गत: सद्गुणो नितराम् । मूर्छां गतो मृतो वा निदर्शनं पारदोऽत्र रस: ॥ इत्यत्र कोऽलंकार इति चेत्, अयमेव निदर्शनशब्दस्य समर्थकपरत्वात् । उपमात्रालंकार इति कश्चित् । एतनोदाहरणालंकारोऽयमतिरिक्त इत्यपास्तम् ।— "अनन्तरत्नप्रभवस्य—किरणेष्विवाङ्क:" इत्यत्र द्वयोरप्यर्थान्तरन्यासयो: संसृष्ट्यादि बोध्यम् ।"—का० प्र० वा० टी०, ६६३ पृ० ।

र्भावमेव पण्डितराज आह । निर्विशेषं न सामान्यम् ।" इति सिद्धान्तेन सामान्यस्य विशेषशून्यत्वाभावतः "अमितगुणोपि पदार्थः" इत्यादि-पद्ये अमित-गुण-पदार्थत्वेन विमलविद्यरूपः कश्चिद् विशेषपदार्थो गृह्यते । दोषेण च कामुकत्वरूपो विशेषो-दोषः । एवं सामान्यस्य विशेषे पर्यवसानं ज्ञेयम् । अन्यथा तस्य प्रस्तुतत्वं न स्यात् । द्वयोर्विशेषयोः सादृश्यमुल्लसत्येव । अत उपमायामेव पर्यवसानमस्यालंकारस्य ।

**स्मरणम् :—**

अस्यालंकारस्य निरूपणं काव्यप्रकाशे विद्यते । रसगङ्गाधरेऽयं निरूपितः । सादृश्य-ज्ञानोद्बुद्ध-संस्कार-प्रयोज्यं स्मरणमेव स्मरणालंकारः । स्मरणस्य सादृश्य-ज्ञानोद्बुद्धसंस्कार-प्रयोज्यत्वाभावे नालंकारत्वम् । एतादृशनियमे सम्प्रदाय एवालं-कारिकाणां प्रमाणम् । स्मरणस्य तथात्वाभावे व्यङ्ग्यत्वे च भावध्वनित्वं वाच्यतायाञ्च वस्तुमात्रत्वम् ।[१] अस्योदाहरणम्—

"दोर्दण्डद्वय-कुण्डलीकृतलसत्कोदण्ड-चण्डध्वनि
ध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येरणम् ।
वल्गद्गाण्डिवमुक्त-काण्डवलयज्वालावलीताण्डव-
भ्रंश्यत्-खाण्डव-रुष्टपाण्डवमहो को न क्षितीश स्मरेत्"

अत्र मध्येरणं तादृशं कुण्डलितकोदण्डध्वनि-ध्वस्तविपक्षं राजानमवलोक्य तादृशार्जुनस्य स्मरणं सादृश्यज्ञानोद्-बुद्धसंस्कार प्रयोज्यमतस्तदलंकारः । काव्य-प्रकाशेप्येवमेवैतदलंकारो लक्षितः ।

**रूपकम् :—**

"तद्रूपकमभेदो य उपमानोपमेययोः" इति मम्मट-कृतं रूपक लक्षणं समा-क्षिपन् पण्डितराज आह यदिदं लक्षणं न निर्दुष्टम् । अतिव्याप्ति-रूपलक्षणदोष-दूषितत्वात् । तथा ह्युपमानोपमेययोरभेदो रूपकम् । स चाऽभेदोऽपह्नुता-वुत्प्रेक्षायाञ्च । तत्रापि तयोरभेदप्रतीतिरनुभवसिद्धा । ननु लक्षणस्थोपमानोपमेय-

---

१. अयं चालङ्कारिकाणां सम्प्रदायो यत्सादृश्यमूलकत्वे स्मरणं निदर्शनादिवदलंकारः। तस्याभावे व्यङ्ग्यतायां चाभावः। तयोरभावे तु वस्तुमात्रम् ।"—र० गं० २ आनने स्मरणालंकार-प्रकरणे ।

योर्ग्रहणम्। तत उपमेयतावच्छेदक-पुरस्कारेणारोप्यमाण उपमानतावच्छेदक-चन्द्रत्वाऽवच्छिन्नाभेदो रूपकं पर्यवसितम्। अतो नापह्नुतावतिव्याप्तिः। उपमेयस्य निषेधात्। नाप्यतिशयोक्तौ सा। तत्रोपमेयस्य शब्दतोऽकथनादिति, चेन्न। उत्प्रेक्षायामतिव्याप्तेरखण्डनात्।" नूनं मुखं चन्द्रः" इत्युत्प्रेक्षायामुपमेयतावच्छेदकं मुखत्वं पुरस्कृत्यैव चन्द्राभेदो मुख आरोपितः। अत्र मुखस्योपमेयस्यापि शब्दतः कथनमिति यावत्।

ननु अस्तु नामापह्नुतावुत्प्रेक्षायामपि रूपकवद्भेदप्रतीतिः। सामान्यं विशेषेण बाध्यते। उपमेयं निषिध्य यत्रोपमानाभेद आरोप्यते तत्र "नेदं मुखं किन्तु चन्द्रः" इत्यादावपह्नुतिरस्तु। सम्भावना स्थले" नूनं मुखं चन्द्रः" इत्यादावुत्प्रेक्षा च। यत्र न निषेधो न च सम्भावना तत्र शुद्धाभेद-स्थले "मुखं चन्द्रः" इत्यादौ रूपकमेव।

**"प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः"**

**"सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्।"**

इत्यादिना लक्षितानामपह्नुत्युत्प्रेक्षादीनां रूपकविषयसंकोचकत्वम्। अतः "तद्रूपकमभेदो य उपमानोपमेययोः" इत्यस्यापह्नुत्युत्प्रेक्षादिभिन्न उपमानोपमेययोरारोप्यमाणोऽभेदो रूपकमित्यर्थः पर्यवसितः। अतो नातिप्रसंगः। विशेषस्य सामान्यविषये स्वातिरिक्तत्वेन संकोचकत्वं प्रसिद्धम्। यथा "शरमयं बर्हिः" इत्यस्य। यथा च व्याकरणे "च्लेः सिच्" इतिविहितस्य सिचः "शल इगुपधादनिटः क्सः" इतिविहित-क्सातिरिक्त एव विषयः। यथा च लोके "ब्राह्मणेभ्यो दधि दीयताम्" इति वचनस्य "तक्रं कौण्डिन्याय" इत्येतद्वचनभिन्न एव विषयः। अर्थात् कौण्डिन्यातिरिक्तेभ्य एव दधि दीयते। एमपह्नुत्यादिविषयातिरिक्त एव विषयो रूपकस्येति नाति-प्रसंग इति चेन्न। उभयस्थलयो वैषम्यात्। यतोहि विशेषशास्त्रं स्वविषयातिरिक्तं विषयं बोधयन् सामान्यशास्त्रस्य बाधकमुच्यते। प्रकृते लक्षणं न शास्त्रमपितु धर्मः। अतो न विशेष-धर्मस्य स्वविषयातिरिक्तं विषयं बोधयतः सामान्य-धर्मबाधकत्वम्। नहि घटत्वं विशेषधर्मः स्वाधिकरणात् पृथिवीत्वं द्रव्यत्वं वा निरस्य विषयान्तरं ग्राहयितुं प्रभवति। एवं नाऽपह्नुत्यादिलक्षणं स्वनिष्ठमभेदं स्वतो निरस्य रूपके ग्राहयितुमीष्टे। अतोऽति-व्याप्तिरवस्थितैव। न च सम्भावनात्मकोत्प्रेक्षालक्षणे कथमभेदात्मकरूपकलक्षणातिप्रसंग इति वाच्यम्। सम्भावनाविषयाभेदोऽप्युत्प्रेक्षेति वक्तुं शक्यत्वात्। सम्भावनाऽभेदयोः सत्त्वेनोत्प्रेक्षायामलङ्कारद्वयव्यवहारापत्तेश्च। सम्भाव्यमानोऽभेद उत्प्रेक्षा न, अभेदसम्भाव ना वा

नोत्प्रेक्षा इत्यत्र नास्ति विनिगमना। ये विषयसम्भावनामुत्प्रेक्षां मन्यन्ते तेषां मतेऽभेदस्यापि उत्प्रेक्षायां सत्त्वेनालंकारस्य व्यवहार-प्रसंग इति यावत्।

अतः "उपमेयतावच्छेकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमान-तादात्म्य-मुपस्कारकं रूपकमलंकारः" इत्येव लक्षणं निर्मातव्यम्। उपमेयतावच्छेदकेतिविशेषणेनाऽपह्नुति-भ्रान्तिमदतिशयोक्ति-निदर्शनासु लक्षणातिप्रसंग-निरासः। अपह्नुतौ निषिध्यमानत्वेन, भ्रान्तिमति भ्रान्तिजनकदोष-प्रतिबध्यमानत्वे, अतिशयोक्तिनिदर्शनयोः साध्यवसानलक्षणामूलकत्वेन च नास्ति उपमेयतावच्छेदक-मुखत्वादि-पुरस्कारेणोपमेय उपमान तादात्म्यस्य शाब्दो निश्चयः। शब्दान्निश्चीयमानमुपमानतादात्म्यमिति कथनेन "मुखमिदं चन्द्रः" इत्यत्र निश्चीयमाने प्रत्यक्षाहार्यविषये चन्द्रतादात्म्ये नातिव्याप्तिः। निश्चीयमानमभेदापरपर्यायतादात्म्यमिति कथनेन "नूनं मुखं चन्द्रः" इत्यत्र निश्चीयमाने प्रत्यक्षाहार्यविषये चन्द्र-तादात्म्ये नातिव्याप्तिः। निश्चीयमानमभेदापरपर्यायतादात्म्यमिति कथनेन "नूनं मुखं चन्द्रः" इत्यत्र सम्भाव्यमानचन्द्रतादात्म्ये नातिप्रसंगः। उपमानोपमेयविशेषणाभ्यां सादृश्यलाभः तेन "सुखं मनोरमा रामा" इत्यादौ शुद्धारोपेऽपि न सः। सादृश्यमूलकमेव तादात्म्यं रूपकमित्यालंकारिकसमयः।

वस्तुतस्त्वत्र काव्यप्रकाशलक्षणखण्डनमयुक्तमेव तथाहि "उपमानोपमेययोः" इत्यस्य विशेषणं वृत्तौ "अनपह्नुतभेदयोः" इति प्रोक्तम् 'अभेदश्चाभेदारोपः। न अपह्नुतो भेदो ययोस्तयोः। भेदश्च मुखत्वचन्द्रत्वादिना शब्दत उपस्थितिः। अतोऽति साम्यान् मुखत्व-चन्द्रत्वादिनोपस्थितयोरुपमानोपमेययोरभेदारोपो रूपकमिति लक्षणार्थः। अतोऽपह्नुताबुपमेयस्य निषिध्यमानत्वात्, अतिशयोक्तौ तस्य तथानुपस्थितेः, भ्रान्तिमति च दोषविशेषेण प्रतिबध्यमानत्वात्तस्य न लक्षणातिप्रसंगः। प्रतीपोद्योतयोः सर्वमेतदुक्तम्। न च निश्चीयमानत्वस्याभेद-विशेषणस्य अनुपादाने "मुखं नूनं चन्द्रः" इत्युत्प्रेक्षायामतिव्याप्तिः, अत्राभेदस्य सम्भाव्यमानत्वादिति वाच्यम्। यतः सम्भावनात्मकं ज्ञानमेवोत्प्रेक्षा, नत्वभेदः। स तु रूपकम्।

**परिणाम :—**

अयमलंकारः साहित्यदर्पणादौ रसगङ्गाधरे च निरूपितः। काव्यप्रकाशेऽयं नोपलभ्यते। एतद्बीजमग्रे प्रतिपादयिष्यते। अस्य किं स्वरूपमिति कथ्यते। यत्र

विषयो विषयात्मतयैव प्रकृतोपयोगी न स्वातन्त्र्येण स परिणामः । इति पण्डितराज आह ।

"विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि ।
परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा ॥"

इति साहित्यदर्पणकृच्चाह । उपमानस्योपमेयतया परिणामादस्यालंकारस्य परिणाम इति नामान्वर्थम् । अयमत्र सारार्थः—यत्रोपमानं स्वतः प्रकृतेऽनुपयुज्यमानं सदुपमेयतया परिणमति प्रकृत उपयुज्यत च तत्रायमलंकारः । रूपके तु उपमेयस्योपमानात्मतया परिणमननम्, नत्वत्रेव उपमानस्योपमेयात्मकतया । किञ्च रूपक उपमानेनोपमेयस्योपादेयत्वम्, अत्र पुनस्तद्-वैपरीत्यम् । इत्थमाह साहित्यदर्पणस्य रुचिराटीकाकारः । उपमान-प्रतियोगिकः अभेदो रूपकम् । परिणामश्चोपमेयप्रतियोगिकोऽभेदः । तत्राभेद उपमेय-प्रतियोगिकत्वं तात्पर्यग्राहकं प्रकृतकार्योपयोगः । न तु तच्छरीरेऽस्य प्रवेशः । एवं च यत्रोपमानं स्वात्मनैव प्रकृतकार्योपयोगि यत्र चोदासीनं तत्र रूपकमेव । यथा—"मुखचन्द्रं समालोक्य सतरङ्गं हृदम्बुधिः" इत्यादौ चन्द्रस्योपमानस्य स्वात्मनैव प्रकृतकार्योपयोग उपमान-प्रतियोगिकाभेदतात्पर्यग्राहकत्वरूपः । "मुखचन्द्रो मनोहरः" इत्यादौ चोपमानस्य चन्द्रस्यौदासीन्यम् । औदासीन्यस्थले रूपक-परिणामयोः सन्देसंकर इति वदन्तोऽतः परास्ताः । रूपकं मयूरव्यसंकादि-समासायत्तम्, परिणामश्च विशेषणसमासायत्तः । मुखचन्द्र इत्यादौ यदि तु चन्द्रमुखमिति प्रयोगो भवति तदा "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति सूत्र-विहित-विशेषणसमासायत्तमपि रूपकम् । वस्तु तस्तु उपमानप्रतियोगिकाभेदसम्बन्धेन बोधकानामुपमानोपमेयपदानां "मयूरव्यंसकादयश्च" इति सूत्रविहितसमासेन "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति सूत्रविहित-विशेषण-समासस्य बाधाच्चन्द्रमुखमिति प्रयोगोऽनुपपन्न इति परेषां मतम् । एतन्मतस्योल्लोखो नागेशेन कृतः ।[1]

परिणामालंकारस्योदाहरणम्—

"अपारे संसारे विषमविषयारण्यसरणौ
मम भ्रामं भ्रामं विगलितविरामं जडमतेः ।
परिश्रान्तस्यायं तरणि-तनयातीर निलयः
समन्तात् सन्तापं हरिनवतमालस्तिरयतु ॥"

१. गु० म० प्र० ३९-३० पृ०

"हरिनवतमाल:" इत्यत्र परिणामालंकार:। तमालस्य उपमानस्य स्वात्मना संसारतापनिर्वतनक्षमत्वाभावेन हर्यात्मना परिणामात्। हर्यात्मना परिणतस्तमाल: संसारतापनिवर्तनक्षम:। हर्यभिन्नस्तमाल इति धी:। रूपके तमालाभिन्नहरिरिति सा। विषमविषयारण्यसरणावित्यत्र रूपकमेव। अतएव परिश्रान्तत्वोक्ति:।

मम्मटस्य परिणामालंकारस्यास्वीकारे प्रकृतोपस्कारकत्वाभाव: परिणामस्य रूपकेन्तर्भावो वा बीजम्। प्रकृतोपस्कारायोपमानानि प्रदर्श्यन्ते। उपमानानामुपमेयीकरणे न चमत्कार:।[१] नहि तमालेन भगवदात्मतया परिणतेन भगवत: कश्चिदुत्कर्ष:। विषयिणां विषयीकरणे चमत्कारमनुपलभ्यैव कव्यप्रकाशकृता रशनारूपकालंकारो नाङ्गीकृत:।[२] केचितु रूपक एवैनमलंकारमन्तर्भावयन्ति।[३] वस्तुतो "हरिनवतामालस्तिरयतु" इत्यत्रोपमालङ्कार एव स्वीकरणीय: "उपमितं व्याघ्रादिभि: सामान्याप्रयोगे" इत्यनेन हरितमालशब्दयो: समास:। परिणामस्थले विशेषणसमासो गुरुमर्मप्रकाशकृतापि प्रोक्त:। तत्र सादृश्यप्रतीतिरेवेष्टा, नतु अभेद-प्रतीति:। अत: "हरिनवतमाल:" इति पदस्य "हरिर्नवतमाल इव" इति विग्रह: प्रदर्श्यते। सादृश्य-बोधनायैव विग्रवाक्ये इव शब्द: प्रयुज्यते। अतो नवतमालसदृशोहरिरित्येव बोध:। सिद्धान्तकौमुद्यां पुरुषव्याघ्रादिशब्दानां तथैव विग्रह: प्रदर्शित:। साधारणधर्मप्रयोगे समासाभावश्चोक्त:।[४] अत एतादृशस्थले वाचक-धर्मलुप्ता उपमा स्वीकार्या। "वन्दे महापुरुष ते चरणारविन्दम्" इत्यत्रापि

---

१. यत्तु, आरोप्यमाणो यत्र विषयात्मतयैव प्रकृत-कार्योपयोगी, न स्वातन्त्र्येण स परिणाम:। अत्र च विषयाभेद:, आरोप्यमाणे, उपयुज्यते रूपके तु नैवमिति विशेष:। "वदनेनेन्दुना तन्वी स्मरतापं विलुम्पतीत्यादि उदाहरणम्।" अत्रहि स्मरतापनाशनसामर्थ्यं मुखात्मनैवेन्दो: ग्रीष्मसंतापहारकत्वाद्रमणीयशोभाधारत्वाच्चेन्दुर्विषयतयोपात्त इति दाक्षिणात्या:, तन्न इन्दौ वदनतादात्म्यप्रतीतेर्वर्णनीयमुखाद्यनुकर्षकत्वेना- लङ्करत्वाभावादिति दिक्। —प्र० उ०, रूपकप्रकरणम्।

२. "किसलयकरैर्लतानां करकमलै: कामिनां मनो जयति। नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदन:॥ इत्यादिरसनारूपकं न वैचित्र्यवदिति न लक्षितम्।" —का० प्र० रूपकप्रकरणान्ते। "यथोपमायां भणितिरिवेत्यादौ राजसंबन्धितया वर्णनीयानां भणित्यादीनामुपमानोपमेयतया कथनं प्रकृतोत्कर्ष-पर्यवसायितया वैचित्र्यंहेतुस्तथा नेत्यर्थ:।" —का० प्रदी० प्रभा० २३२ पृ०।

३. परिणामालङ्कारस्तु रूपके एवान्तर्भवतीत्याहु:। —का० प्र० वा० टी० ३०६ पृ०।

४. सामान्याऽप्रयोगे किम्। पुरुष: व्याघ्र इव शूर:। —सि० कौ० ७३६ सू० वृत्तौ।

अरविन्दसदृशचरणौ वन्द इति धीः। नत्वरविन्दाभिन्नचरणाविति चरणाभिन्नारविन्दे इति वा।

**ससन्देह :—**

"ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः" इति मम्मटः। "सादृश्यमूलाभासमानविरोधका समबला नानाकोट्यवगाहिनी रमणीया ससन्देहालंकृतिः" इति पण्डितराजः। मम्मटलक्षणे ससन्देह इति लक्ष्यनिर्देशः, संशय इति लक्षणम्। "प्रकृतस्य समेन यत्" इति च पूर्वसूत्रादनुवर्तते। समशब्देनोपमानस्य ग्रहणम्। तेनोपमानेन सादृश्यज्ञानप्रयोज्यं प्रकृतस्योपमेयस्य संशयात्मकं ज्ञानं ससन्देहालंकृतिरिति मम्मटलक्षणवाक्यानिष्कर्षः। चमत्कार-जनकमिति सामान्यलक्षणमनुगतमेव। संशयस्य समबल-नानाप्रकारकैकधर्मिकज्ञानरूपत्वं प्रसिद्धमेव। अतो मम्मटलक्षणार्थप्रतिपादकं पण्डितराजस्य लक्षणवाक्यम्। एतदलंकारविषय उभयोः साम्यमेव। अतः सादृश्यज्ञानाप्रयोज्ये संशये चमत्काररहिते "स्थाणु र्वापुरुषो वा" इत्यादिसंशये च नातिव्याप्तिः। भ्रान्तिमति उत्प्रेक्षायां चापि न सा। तत्र भ्रान्तेः सम्भावनायाश्च साम्राज्यात्।

अयं त्रिविधः। निश्चयगर्भ-निश्चयान्तशुद्धरूपत्वात्। अयमलंकारः सादृश्यमूल इति प्रागुक्तम्, अतोऽत्र सादृश्यनियामकस्य धर्मस्य स्थितिः। स च धर्मः क्वचिदेक एव क्वचिच्च पृथक्। उभयोः प्रत्येको धर्मः, अनुगामि-बिम्बप्रतिबिम्बभावापन्नानिर्दिष्टनिर्दिष्टरूपै भेर्देश्चतुर्धा। एवं संकलनयाऽष्टधा सः। उदाहरणानि ग्रन्थयोः प्रत्तान्येव।"

**भ्रान्तिमान् :—**

"भ्रान्तिमानन्यसंवित्तुल्य-दर्शने" इति काव्यप्रकाशकारः।

"सदृशेधर्मिणि तादात्म्येन धर्म्यन्तरप्रकारकोऽनाहार्यो निश्चयः सादृश्यप्रयोज्यश्चमत्कारी प्रकृते भ्रान्तिः सा च पशुपक्ष्यादिगता यस्मिन् वाक्यसन्दर्भेऽनूद्यते स भ्रान्तिमान्।" इति रसगंगाधरकारः। मम्मटस्य भ्रान्तिमतो लक्षणे तदा सर्वनाम्ना पूर्वप्रक्रान्तम प्राकरणिकं परामृश्यते। तेनाऽप्राकरणिकेन तुल्यमर्थात् प्राकरणिकमेव। अन्य-पदेनाऽप्राकरणिकस्य ग्रहणम्। अतः "अप्राकरणिकसदृशस्य प्राकरणिकस्य अन्यसंवित् अन्यत्वेनाऽप्राकरणिकत्वेन संवित् ज्ञानं स भ्रान्ति

मानलंकार इति सारार्थः ।"[१] तेन प्राकरणिकस्याऽप्राकरणिकतुल्यस्य दर्शने सति यदप्राकरणिकत्वेन ज्ञानं स भ्रान्तिमानित्यर्थः इति प्रदीपकारः । पण्डितराजस्य तादृशं ज्ञानं भ्रान्तिरेव, न तु भ्रान्तिमान् । अपितु तन्मते पशुपक्ष्यादिगता तादृशी भ्रान्तिर्यत्र अनूद्यते स वाक्य सन्दर्भ एव भ्रान्तिमानलंकारः । तादृश्याः संविदो भ्रान्तिरूपत्वान्न भ्रान्तिमत्त्वम् । अपितु वाक्यसन्दर्भ एव भ्रान्तिमानिति रम्या रीतिः ।अन्यथा मतुबनुपपन्नः स्यात् । "कपाले मार्जारः" इत्यादिपद्योदाहरणेन प्रतीयते यत् काव्यप्रकाशकारस्यापि पशुपक्ष्यादिगताया एव तादृश्याः संविदो भ्रान्तिमदलंकारत्वं नान्यगताया इति । अन्यत्रोभयोः साम्यमेव ।

**उल्लेखः—**

अयं साहित्य-दर्पण-कुवलयानन्द-रसगङ्गाधरादिग्रन्थेषूपलभ्यते । काव्यप्रकाशकृताऽयं न चर्चितः । अस्य स्वरूपमाह पण्डितराजः—

"एकस्य वस्तुनो निमित्तवशाद् यद्यनेकग्रहीतृभिरनेकप्रकारकं ग्रहणं तदुल्लेखः ।" एवमेव साहित्यदर्पणेऽपि ।[२] यत्किञ्चिन्निमित्तवशेनैकस्य वस्तुनो नानाग्रहीतृभिर्नानाप्रकारकं ज्ञानमुल्लेख इति निष्कर्षः । नानाकर्तृकमेकवस्तुनि नाना प्रकारकं सनिमित्तं ज्ञानमुल्लेख इति यावत् । एकस्य वस्तुनोऽनेकधोल्लेखनादुल्लेख इत्यन्वर्थन्नाम ।

"मुखं चन्द्रमसं ज्ञात्वाऽधरं च नलिनीदलम् ।
चकोराश्चञ्चरीकाश्च विन्दन्ति परमां मुदम् ॥"

इत्यत्रातिव्याप्तिवारणार्थ मेकस्य वस्तुन इति प्रोक्तम् । अत्र तु भिन्नयोर्मुखाधरयोर्वस्तुनोर्भिन्नाभ्यां चकोर-चंचरीकाभ्यां ग्रहणम् । एवमेकस्य वस्तुनो नानात्वेनैककर्तृक-ग्रहणस्थले तथाविधस्य तस्य चैकप्रकारेण ग्रहणस्थले नायमलंकारः । अस्यालंकारस्येदमुदाहरणाम्—

"नरैर्वरगतिप्रदेत्यथ सुरैः स्वकीयापगे-
त्युदारतरसिद्धिदेत्यखिलसिद्धसङ्घैरपि ।

---

१. प्राकरणिकार्थ-दर्शनोद्बुद्धसंस्कारजन्यस्मृत्युपनीताप्राकरणिकात्मतया प्राकरणिकज्ञानं भ्रान्तिमान् इतिभावः । —का० प्र० वा० टी० ७३३ पृ० ।

२. क्वचिद् भेदाद्ग्रहीतृणां विषयाणां तथा क्वचिद् । एकस्यानेकधोल्लेखो, यः स उल्लेख उच्यते ।" —सा० द० १० कारिका ।

हरेस्तनुरितिश्रिता मुनिभिरस्तसङ्गैरियं
तनोतु मम शं तनोः शन्तनोरङ्गना ॥"

अत्र लिप्सारुचिभ्यां निमित्ताभ्यां गङ्गारूपस्यैकस्य वस्तुनो नर-सुर-सिद्धसंघ-मुनिरूपनानाग्रहीतृभिर्वरगति-प्रदात्व-स्वकीयनदीत्वोदारतरसिद्धि-प्रदात्व-हरि-तनुत्वरूपनानाप्रकारैर्ग्रहणैरुल्लेखालंकारः। स च जगन्नाथकविनिष्ठ गङ्गाविषय-करतेरूपस्कारकः। सोऽत्र शुद्धः, रूपकाद्यलंकारैरमिश्रणात्। यत्र रूपकभ्रान्तिमदादिमिश्रणं तत्रायं संकीर्णः।

मम्मटमतेऽस्यालंकारस्य द्वितीयायामतिशयोक्तावन्त र्भावः। तस्या अतिशयोक्तेश्च "प्रस्तुतस्य यदन्यत्वम्" इति लक्षणम्। प्रस्तुतस्य वस्तुनोऽन्यवस्तुत्वेनाऽध्यवसायो द्रढीयसी धीरिति यावत्तदर्थः। प्रकृते प्रागुक्ते पद्ये गङ्गारूपस्य वस्तुनो वरगतिप्रदात्वादिनाऽन्यत्वेनाध्यवसानम्। अत एतादृशस्थले सैवातिशयोक्तिः। न तूल्लेखनामा पृथगलङ्कर। इति तत्त्वम्। एतत् सर्वमुद्योते स्पष्टम्।[१]

उत्प्रेक्षा :—

"सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्" इतिकाव्यप्रकाशकृत्। समशब्द उपमान परः। समयति समं करोतीति समम्। समशब्दात् "तत्करोति तदाचष्टे" इतिविहितण्यन्तात् कर्तरि पचाद्यच् प्रत्ययः। सूत्रे "समेन" इति पदानन्तरं "सह

१. अत्रेदं बोध्यम्। "प्रस्तुतस्य यदन्यत्वम्" इत्यस्य प्रस्तुतस्य, अन्यवस्तुत्वेनाध्यवसायः इत्यर्थः। यथा "तस्याः सखे नियतमिन्दुसुधामृणालज्योत्स्नादिकारणमभून्मदनश्च वेधाः" इत्यत्र प्रकृतनायिका-सम्बन्धिकारणस्य निर्मातुश्च विविक्ताकारवस्त्वन्तररूपमृणालादित्वेनाऽध्यवसानम्। अस्याः सर्गविधौ" इत्यादौ तु नैवं निश्चयाभावात्। यथा वा "प्रत्यम्भो नवपुण्डरीकमुकुलश्रेणी प्रतिक्ष्माधरं पूर्णेन्दोरुदयः प्रतिक्षितिरुहं मल्लीप्रसूनोत्करः। किं वान्यत् कथयामि वीर जगतीरालिम्पति त्वद्यशोविस्तारे प्रतिदेशमेव दिविषत्स्रोतस्विनीनिर्झरः" इति। अत्रैकैव कीर्तिस्तत्तत्स्थाने योग्यतावशात्तेन तेन रूपेणा व्यवस्थिता। यथा वा "स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः" इति। अत्र निमित्तभेदाततद्रूपेणाध्यवसायः स च कविनिबद्ध-कर्तृक इत्यन्यत्। गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने इत्यत्रापीयमेव। अत्र श्लेषसंकीर्णेयमित्यन्यत्। एतेनेदृशेषु विषयेषु, उल्लेखालंकारोऽयमतिरिक्त इति केषाञ्चिदुक्तिः परास्ता।" —प्र० उ०, अतिशयोक्तिप्रकरणम्।

एकरूपतया" इति शेषः। प्रकृतस्योपमानस्योत्कटेक्षा ज्ञानमुत्प्रेक्षापदार्थः। सम्भावना चोत्कटकोटिकः संशयः। एवं प्रकृतस्योपमानेन सहैकरूपतयोत्कटकोटिकः संशय उत्प्रेक्षेति सूत्रस्य फलितार्थः। अत्र समशब्द-प्रतिपाद्यस्य कविकल्पितस्यैवोपमानस्य न तु लोक प्रसिद्धस्य ग्रहणम्। लोकप्रसिद्धोपमानस्थले तूपमैव। चक्रवर्ति भट्टाचार्यैरपि प्रोक्तम्—

"यदायमुपमानांशो लोकतः सिद्धिमृच्छति।
तदोपमैव येनेव-शब्दः साधर्म्यवाचकः॥
यदा पुनरयं लोकादसिद्धः कवि-कल्पितः।
तदोत्प्रेक्षैव येनेव-शब्दः सम्भावनापरः॥

इवशब्दसमभिव्याहारे सिद्धोपमानस्थले नोत्प्रेक्षा। तदतिरिक्तनूनमित्यादावुत्प्रेक्षा भवत्येव। ससन्देहः समानकोटिक-संशयः। इयं चोत्कटकोटिसंशय इति प्रागभिहितम्। अत्राप्यलंकारत्वे सतीति विशेषणं प्राप्तमेव। तेनाचमत्कारि-कवि-प्रतिभानुत्थापित-सम्भावनायां नातिव्याप्तिः। इति काव्यप्रकाशोक्तोत्प्रेक्षालक्षणं व्याख्यान्ति व्याख्यातारः।

रसगङ्गाधरकृता विनिगमनाविरहादन्योन्याभावात्यन्ताभावघटितं लक्षणद्वयं कथितम्। तद्भिन्नत्वेन प्रमितस्य पदार्थस्य रमणीयतद्वृत्तितद्धर्मसम्बन्धनिमित्तकं तत्त्वेन सम्भावनमुत्प्रेक्षेत्येकम्। तदभाववत्त्वेन प्रमितस्य पदार्थस्य रमणीय-तत्समानाधिकरणतद्धर्मसम्बन्धनिमित्तकं तत्त्वेन सम्भावनमिति द्वितीयम्। यथा "नूनं मुखं चन्द्रः" इत्यत्र चन्द्रभिन्नत्वेन यथार्थज्ञानविषयीकृतस्य मुखस्य चन्द्रत्वेन सम्भावनम्। तस्य निमित्तञ्चमुखनिष्ठाह्लादकत्वादिचन्द्रधर्म-सम्बन्धः। एतादृशस्थले धर्म्युत्प्रेक्षा। अत्र तादात्म्येनोत्प्रेक्षणम्।

"निधिं लावण्यानां तव खलु मुखं निर्मितवतो
महामोहम्मन्ये सरसिरुहसूनोरुपचितम्।
उपेक्ष्य त्वां यस्माद्विधुमयकस्मादिह कृती
कलाहीनं दीनं विकल इव राजानमतनोत्।"

इह महामोहरूपधर्माभाववत्त्वेन प्रमितस्य विधेर्महामोहधर्मवत्त्वेन सम्भावनम्। तन्निमित्तं च महामोहसमानाधिकरणाविचार्यकारित्व-रूपधर्म सम्बन्धः। ईदृशस्थले धर्मोत्प्रेक्षा। विधावत्र महामोहस्य समवायसम्बन्धेनोत्प्रेक्षणम्। एवमेकत्र

तादात्म्येनापरत्र च समवायादिसंसर्गेणोत्प्रेक्षणमिति द्विविधं लक्षणमभिहितम्। एतंल्लक्षणद्वय-पदकृत्यं ग्रन्थ एव प्रदर्शितम्। अतस्तन्न प्रदर्श्यते।

प्राचामनुरोधेन केचिदुत्प्रेक्षाभेदा रसगङ्गाधरे प्रदर्शिताः। तथाहि-उत्प्रेक्षा-द्विधा। वाच्या प्रतीयमाना च। इवादिप्रयोग आद्या, तदभावे च द्वितीया। सापि प्रत्येकं त्रिधा-स्वरूप-हेतु-फलोत्प्रेक्षा-भेदात्। तत्र जाति-गुण-क्रियाद्रव्यरूपाणां तदभावरूपाणां च पदार्थानां तादात्म्येन तद्भिन्नेन वा सम्बन्धेन जाति-गुण-क्रिया-द्रव्यात्मकै र्व्यस्तैः समुच्चितै रुपात्तैरनुपात्तैर्निष्पाद्यै र्निष्पन्नैर्वा निमित्तभूतै धर्मैर्यथा-सम्भवं जाति-गुण-क्रिया द्रव्यात्मकेषु विषयेषूत्प्रेक्षणं स्वरूपोत्प्रेक्षा। अभेदेन संस-र्गेण धर्मिस्वरूपोत्प्रेक्षा संसर्गान्तिरेण च धर्म-स्वरूपोत्प्रेक्षा। एवमाद्या द्विधा। एवमुक्ताकारेषु पदार्थेषु पूर्वोक्तप्रकाराणां पदार्थानां तथाविधैरेव निमित्तै र्यथास-म्भवं हेतुत्वेन फलत्वेन च संभावनं हेतूत्प्रेक्षा फलोत्प्रेक्षा चोच्येते।

एते जात्यादय उत्प्रेक्षाभेदा प्राचीनानामनुरोधेनोक्ताः। वस्तुत एषां चमत्कारे विशेषाभावेन पृथग्गणाना नोचिता। स्वरूप-हेतु-फलरूपाणां त्रिविधानामेवोत्प्रेक्षा-णां चमत्कारे विशेषोपलम्भः। अतस्त्रय एव ते स्वीकार्याः। एवं षडेवोत्प्रेक्षा-भेदा-स्तेन स्वीकृताः स्वरूपहेतुफलोत्प्रेक्षास्त्रिविधा वाच्या तथा च प्रतीयमाना। स्वरूपोत्प्रेक्षायाश्च द्वौ भेदौ—धर्मस्वरूपोत्प्रेक्षा धर्मिस्वरूपोत्प्रेक्षा च। इत्थमुत्प्रे-क्षाप्रकरणे रसगङ्गाधरे स्पष्टम्। काव्यप्रकाशकृतोत्प्रेक्षाभेदा न वर्णिताः। तत्र हेतु-श्चेदृशभेद-प्रतिपादने चमत्कारभावः।[१]

**उभयलक्षणनिष्कर्षः—**

उपमेयस्योपमानेन सह अभेदेन सर्वत्र सम्भावनमुत्प्रेक्षेति मम्मटलक्षणनि-ष्कर्षः। उपमेयस्योपमानेन सहाभेदेन संसर्गान्तरेण वा सम्भावनं सेति पण्डितराजः। अभेदेन सम्भावनं धर्मिस्व-रूपोत्प्रेक्षायां संसर्गान्तरेण च तद्धर्मस्वरूपोत्प्रेक्षायाम्।

तत्र प्राचां मम्मटप्रभृतीनामित्थमाशयः। सर्वत्राभेदेनैवोत्प्रेक्षणम्। यथा "मुखं चन्द्रं मन्ये" इत्यादौ मुखादेश्चन्द्रादिनाऽभेदेनैव तत्। अभेदप्रतीतिश्चानु-भवसिद्धा।

१. ईदृशवैचित्र्यसहस्रं न चमत्कारायेति न ग्रन्थकृतोक्तम् इति सर्वं प्रदीपोद्योतादिषु स्पष्टम्।"—का० प्र० वा० टी० ५८६ पृ०।

"नामार्थयोः साक्षादभेदान्वय एवेष्टः ।"

अस्यां मुनीनामपि मोहमूहे

भृगुर्महान् यत् कुचशैलशीली ।

नानारदाह्लादिमुखं जितोरु—

र्व्यासो महाभारत सर्गयोग्यः ॥

इति नैषधीयपद्यस्थायां धर्मस्वरूपोत्प्रेक्षायामपि मुनिसम्बन्धि-दम्यन्ती-कर्मकविलोकनस्य विषयस्य धर्मरूपस्य धर्मेण मोहेन सहाभेदेनैव सम्भावनम् । उत्प्रेक्षायाः साध्यवसानत्वात् क्वचिद् विषयस्यानुपादानमपि संगच्छते । न चोत्प्रेक्षायां विषयस्यापि सद्भावेन कथं तत्र साध्यवसानत्वमिति वाच्यम् । आहार्यनिश्चयस्यैवात्राऽध्यवसानपदार्थत्वात् । विषयिवाचकपदोच्चारणेनानुपात्तेऽपि दर्शनादौ विषये मोहस्य विषयिणोऽभेदो नानुपपन्नः । क्वचित् विषयवाचकपदोच्चारणेऽपि विषयस्य विषयिरूपतया आहार्यनिश्चयोऽवश्यं भवति । एवमुत्प्रेक्षायां विषयः क्वचिदुपात्तोभवति । यथा "नूनं मुखं चन्द्रः" इत्यादिस्थले । क्वचिच्चानुपात्तः । यथा "अस्यां मुनीनामपि मोहमूहे" इति प्रागुक्ते नैषधीय-पद्ये मुनिकर्तृक-दमयन्ती-कर्मकविलोकनस्य विषयस्यानुपादानम् । एवं

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः"

इति पद्ये मम्मटोक्तोत्प्रेक्षा-स्थले विषयस्य तमः-कर्तृकव्यापनादेरनुपादानम् । अतएव "इत्यादौ व्यापनादि लेपनादिरूपतया सम्भावितम्" इत्युक्तम् । अत्र साम्यभानं तमसो व्यापनादि लेपनादिरूपतया सम्भावितम् इति प्रदीपे चोक्तम् । तथा चात्र तमःकर्तृकाङ्ग कर्मक व्यापनं तमःकर्तृकाञ्जनकर्मकाधःप्रसरणं च भ्रमातिशयकारकत्व-सकलवस्तुमलिनीकारकत्वादिनिमित्तैस्तत्तत्कर्तृकतत्तत्कर्मकलेपनवर्षणात्मकतया सम्भाविते । एवमत्र क्रियारूपधर्मस्वरूपोत्प्रेक्षा । तिङन्तसमव्याहृतस्येवस्य सम्भावनाद्योतकत्वं प्रसिद्धम् । "धातोः कर्मणः समानकर्तृकादिच्छायां वा'' इतिसूत्रे भाष्ये न वै तिङन्तेनोपमानमस्ति इति प्रोक्तम् । किन्तु तत्र सम्भावनार्थक इवशब्दः" "इति कैयटेन चोक्तम् । सिद्धपदार्थ एवोपमानम् । न तु साध्यम् । तिङर्थकर्ता च साध्यत्वान्नोपमानम् ।"

सिद्धमेव समानार्थमुपमानं विधीयते ।

तिङन्तार्थस्तु साध्यत्वादुपमानं न जायते ।"

एवं सर्वत्र तिङन्तसमभिव्याहृतेवस्थल इवस्य सम्भावनाद्योतकत्वम् । अतो लेपनकर्तृतादात्म्यमपि अत्र नोत्प्रेक्षितुं शक्यम् । कर्तुः तिङन्तेनोपात्तत्वेऽपि धातुवाच्यक्रियायां विशेषणीभूतत्वात् । अतः कर्तुरुत्प्रेक्षणीयतयान्यत्र योगोऽनुपपन्नः । "एकविशेषणं नापरत्र स्वार्थं प्रत्याययति" इति हि नियमः । व्यापारस्य प्राधान्यं "भावप्रधानमाख्यातम्" इति ग्रन्थेन यास्केनोक्तम् । अत्राख्यातपदं तिङन्तपरम् । अतस्तिङन्ते भाव एव प्रधानमितदर्थः । क्रियाविशेष्यक एव शाब्दबोधोऽत एव वैयाकरणैरङ्गीकृतः । भावस्य प्राधान्यमन्यत्रापि व्यवस्थापितम् ।[1] अतएव दण्डिना तिङ्र्थकर्तुरुपमानत्वं निरस्तम् ।[2]

एवम्—

"उन्मेषं यो मम न सहते जाति-वैरी निशाया-

मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्य-दर्पः ।"

नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा

ल्लग्ना मन्येललितततनु ते पादयोः पद्मलक्ष्मीः ।

इत्यत्रापि कामिनी-चरणयोः पद्मलक्ष्म्याः स्वभावलग्नत्वमुपमानभूतोक्तहर्षहेतुकलग्नत्वेन विषयिणा सम्भावितम् । अत्रापि अभेदेनोत्प्रेक्षणम् । एवमेव फलोत्प्रेक्षायामपि, अभेदेनैवोत्प्रेक्षणम् ।

सर्वत्राभेदेनैव सम्भावनमिति प्राचां सिद्धान्तमुपक्षिपता पण्डितरोजेनाभ्यधायि यत् सर्वत्र तथा सम्भावने मानाभावः । भेदेनापि समवायादिसंसर्गेणोत्प्रेक्षणस्य दर्शनात् । न च "अस्यां मुनीनामपि मोहमूहे" इत्यादौ मुनिकर्तृकदमयन्तीकर्मकदर्शनस्य विषयस्य मोहरूपेण विषयिणा सहैकरूपतया (अभेदेन) एव सम्भावनमिति वाच्यम् । समवाय-सम्बन्धेन (भेदेन) अपि सम्भावने सम्भवे तादृशकल्पनाया अनुचितत्वात् । नहि भेदेनोत्प्रेक्षणे बाधोऽस्ति ।

अतो मुनिषु समवायेनोत्प्रेक्षणं मोहस्य । सर्वत्राभेदेनैव तदिति न वेदेन बोधितम् यदर्थमेतादृशं कल्पनम् । एवं "लिम्पतीव तमोङ्गानिं" इत्यादावपि तमो-नभसो

---

१. फलव्यापारयोर्धातुराश्रये च तिङः स्मृताः ।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ —वै० भू० सा० २ कारिका ।

२. कर्ता यद्युपमानं स्याद् न्यग्भूतोऽसौ क्रियापदे ।
स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम् ॥ —काव्यादर्शः ।

विषययो र्लेपन-वर्षणकर्तृत्वयोरेवोत्प्रेक्षणं समवायेन। लिम्पति-वर्षतिपदनिष्ठतिङर्थस्य सामान्यकर्तुस्तमआदौ कर्तरि विशेषे नाभेदेनान्वयः। अपितु कर्तृत्वमेव तिङ्वाच्यम्। तस्य चाश्रयतासम्बन्धेन प्रथमान्तार्थतमोनभसोरन्वयः। कर्तृत्वं च कृतिरूपं व्यापाररूपमिति यावत्। अतस्तिङर्थस्य व्यापारे विशेषणत्वमिति निरस्तम्। अतो भेदेन तमोनभसोर्लेपन-वर्षण-कर्तृत्वयोरेवोत्प्रेक्षा। न च "भावप्रधानमाख्यातम्" इति यास्कवचनविरोध इति वाच्यम्, तत्राख्यातपदस्य तिङ्परत्वेन कर्तृत्वकालादितिङ्र्थेषु भावो व्यापारः प्रधानमिति तदर्थकरणेन विरोधाभावः। फलमात्रं धात्वर्थः, व्यापारश्च तिङ्वाच्य इति भावः। "भावप्रधानमाख्यातम्" इत्यत्रत्यप्रधानपदमभिधेयपरम्। यथा "सत्वप्रधानानि नामानि" इत्यत्रत्यं प्रधानपदम्। अतस्तिङ् भावार्थक इत्येव तन्निरुक्तग्रन्थार्थः। न च व्यापारस्य धातुवाच्यत्वाभावे "फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वं तत्समानाधिकरणव्यापारवाचकत्वम् अकर्मकत्वम्" इति सकर्मकाकर्मकत्वव्यवहारोच्छेद इति वाच्यम् "आख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वं तत्समानाधिकरणफलवाचकत्वमकर्मकत्वमिति रूपेण सकर्मकत्वाकर्मकत्वयोरुपपत्तेः। न च तिङर्थव्यापारात्मकस्य कर्तृत्वस्याश्रयतासम्बन्धेन प्रथमान्तार्थेऽन्वयाङ्गीकारे भावविहितघञादिकृत्प्रत्ययस्य व्यापारस्यापि आश्रयतासम्बन्धेन नामार्थेऽन्वयापत्तिरिति वाच्यम्। "नामार्थयोरभेदातिरिक्तसम्बन्धोऽव्युत्पन्नः" इति व्युत्पत्तेर्जागरूकत्वेन तस्य भेदेनान्वयस्यानापत्तेः। "भवति" इत्यादिसाध्यावस्थापन्नक्रिययैव भेदेनान्वयः।

ननु "लः कर्माणि च भावे चाकर्मकेभ्यः" इति सूत्रे "कर्तरि कृत्" इतिसूत्रतः "कर्तरि" इति पदमनुवर्तते। ततश्च लकाराः सकर्मकेभ्यः कर्तरि कर्मणि चाकर्मकेभ्यश्च धातुभ्यो भावे कर्तरि च भवन्तीति "लः कर्मणि" इत्यादिसूत्रार्थः सम्पद्यते। ततो लकाराणां कर्तरि शक्तिरिति सिद्धे तदादेशानां तिङामपि कर्तर्येव सा, न तु कर्तृत्वे। अतः "भावप्रधानमाख्यातम्" इत्यस्य "भावनार्थकस्तिङ्" इत्यर्थ-करणं तमआदौ लेपनकर्तृत्वादेश्च सम्भावनमनुपपन्नमिति चेन्न। "लः कर्मणि" इति सूत्रेऽनुवृत्तस्य "कर्तरि" पदस्य भाव (कर्तृत्व) परत्वेन लकाराणां कर्तृत्व एव शक्ति सिद्धेः। "कर्तरि कृत्" इति सूत्रेण कृतामपि कर्तृत्व एव शक्तेरङ्गीकारापत्तिरिति वाच्यम्। "कर्तरि कृत्" इति सूत्रे कर्तरिपदस्य कर्तृत्वविशिष्टबोधकत्वेनात्र चानुवृत्तेन च तेन कर्तृत्वबोधकत्वेन कृतामपि कर्तृत्वे शक्तेरसिद्धेः। यदि कृतामपि "कर्तरिकृत्" इत्यनेन कर्तृत्वे शक्तिः सिद्ध्येत्तदा भावे घञादीनां विधानमनर्थकं स्यात्। तेन कृतां कर्तरि तिङां च कर्तृत्वे शक्तिरङ्गीक्रियते। न च कर्तृत्वविशिष्ट-

परकर्तरिपदस्य "ल: कर्मणि" इत्यादि सूत्रेऽनुवृत्तस्य कर्तृत्व परत्वेन व्याख्यानमनुचितमिति वाच्यम्। शब्दानुवृत्तेरङ्गीकारात्।

अथवा भवतां नाम फल-व्यापारौ धातु-वाच्यौ। आश्रयश्च कर्मादि:। परन्तु "देवदत्त: पचमान:" इत्यादाविव "देवदत्त: पचती" त्यादावपि तिङर्थस्य कर्तुरभेदेन प्रथमान्तार्थदेवदत्तादावेव विशेषणत्वं युक्तं न तु भेदेन भावनायाम्। अन्यथा सार्वजनीनोद्देश्यविधेयभावस्य भङ्गः स्यात्। देवदत्त: पचतीत्यत्र देवदत्तमुद्दिश्य पाककर्तृत्वं विधीयते। "तमो लिम्पति" इत्यत्र च प्रथमान्तार्थस्तम उद्धद्देश्यं विधेयं च लेपनम्। ततश्च लेपनकर्तृ इव लेपनकर्तृत्वस्यैवोत्प्रेक्षणं प्रतिपाद्यं न तु लेपनस्य। "प्रकृति-प्रत्ययार्थयो: प्रत्ययार्थस्यैव प्राधान्यम्" इत्यौत्सर्गिकनियम एवात्र न्याय:। भावनाया: प्राधान्येऽस्य भङ्गः स्यात्। तस्माद् गतौ सत्त्यामस्य नियमस्य भंगे न कारणम्। न च "भावप्रधानमाख्यातम्" इति यास्कवचनविरोध इति वाच्यम्, तत्राख्यातपदस्य धातु-परत्वेन प्रधान-पदस्य चाभिधेयवाचकत्वेन "भावनार्थको धातुरित्यर्थ-करणेन दोषाभावात्। न च वैयाकरणमत-विरोध इति वाच्यम्, आलंकारिकमतस्य स्वतन्त्रत्वेन तद्विरोधस्याकिञ्चित्करत्वात्। इत्थं "लिम्पतीव तमोऽङ्गानि" इत्यादौ प्रथमान्तार्थतमआदौ लेपनादिकर्तुरभेदेन लेपनादिकर्तृत्वस्य वा भेदेन (समवायेन) सम्भावनम्। न तु सर्वत्राभेदेनेति वेदोक्तो नियम:। यदि निगीर्णे व्यापनादौ लेपनादेरुत्प्रेक्षा तदा सर्वजनानुभवसिद्धाया इवपदप्रतिपाद्यसम्भावनानिष्ठविधेयताया अनुपपत्ति: स्यात्। कस्यचिद् विधेयत्वमुद्देश्यं पुरस्कृत्यैव भवति। प्राचां मते व्यापनामुद्देश्यं निगीर्णम्, नहि तत् कथितम्। अतएव उद्देश्यबोधकशून्यतया विषयताया भङ्गः। न च निगीर्णमेवोद्देश्यमादाय सम्भावनाविधेयताया अभंग इति वाच्यम्।" तम:कर्तृकं लेपनमिव" इति रूपादुद्देश्य-बोधशून्याद्वाक्यादपि उत्प्रेक्षाविधेयता-प्रतीतेरापत्ते:। न चेष्टापत्ति:। अनुभवविरोधात्। ननु अनुपात्तविषयवाचकपदतया उद्देश्यबोधकपदशून्यत्वं कारणवशादस्ति। यत: सम्भाव्यमानं तम:कर्तृकं लेपनं प्रति तम:कर्तृकं व्यापनं निमित्तमस्ति। तादृशनिमित्तता तावन्नोपपद्यते यावद् व्यापनस्य लेपनतादात्म्यं न भवति। लेपनतादा-त्म्योपपत्तिश्च व्यापनस्य निगीर्णत्व एव। ततश्चैवंभूत-निमित्ततासम्पत्तये सेयमनुपात्तविषयता, अध्यवसानमूलता चास्ति, इति चेन्न। रूपकेऽप्येवमापत्ते:। यत: "लोकान् हन्ति खलो विषम्" इत्यत्र खलसम्बन्धिदु:खदानादि-विषय एव विषसम्बन्धिहननरूपविषयितयाऽध्यवसीयते। एवं प्रसिद्धरूपके मुख चन्द्र इत्यादौ मुखनिष्ठाह्लादकत्वादिर्गुण: चन्द्रनिष्ठाह्लादकत्वादित्वेनाध्यवसीयते। तथा च

रूपकेऽपि अनुपात्तविषयत्वमध्यवसानमूलत्वं च स्वीकार्यं स्यात्। तस्मात्तमसि लेपनकर्तृत्वस्यैव लेपनकर्तुरिव वा भेदेनाभेदेन वा सम्भावनम्। न तु व्यापने लेपनस्य। परं लेपनकर्तृत्वस्य सम्भावनायां यदिदमङ्गकर्मकं व्यापनं निमित्तं तदिह नोपात्तम्। अपितु लेपनरूपेण विषयिणा निगीर्णम्। अतो निमित्तांशेऽतिशयोक्ति-रेव। अयमाशयः। प्राचीनैः स्वरूपोत्प्रेक्षायां ये व्यापन-लेपने विषयविषयितया स्वीकृते ते वास्तवे तौ विषय-विषयिणोः तमोलेपन-कर्तृत्वयोः धर्मौ स्तः, न तु स्वयं विषयविषयिणौ। अतस्तदंशेऽतिशयोक्तिर्नोत्प्रेक्षा। तत्र साहजिकसम्बन्धे तादा-त्म्येनाऽध्यवसितं लगनमेव निमित्तम्।

इत्थं पण्डितराजेन क्वचिदभेदेन क्वचिच्चभेदेन सम्भावनमिति साधितम्, निरस्तं च सर्वत्राभेदेनोत्प्रेक्षण मिति प्राचां काव्यप्रकाशकारादीनां मतम्।

**अपह्नुतिः—**

"प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः" इति मम्मटः। उपमेयमसत्यं कृत्वोपमानस्य सत्यतया व्यवस्थापनमपह्नुतिरिति लक्षणार्थः। निषेधः क्वचिच्छाब्द आर्थश्च। तत्कृतभेदयोर्न विशेषः।

"उपमेयतावच्छेदक-निषेध-सामानाधिकरण्येनारोप्यमाणमुपमानतादात्म्यम पह्नुतिः।" इति जगन्नाथः। उपमेयतावच्छेदकस्योपमेयनिष्ठासाधारणधर्मस्य मुख-त्वादेर्यो निषेध श्शाब्द आर्थो वा तत्सामानाधिकरण्येन तदधिकरणवृत्तित्वेनारोप्या-माणमाहार्यनिश्चयविषयीक्रियमाणं यदुपमानतादात्म्यं चन्द्रादेरुपमानस्या-भेदोऽपह्नुतिरिति तदर्थः। अस्यामलंकृतावुपमेयतावच्छेदकस्य निषेधेनोपमेयतोप-मानतावच्छेदकयोर्विरोधोऽवभासते। रूपके तु सामानाधिकरण्यप्रत्ययेन स निव-र्तते। एवमिदमलंकारलक्षण उभयोः साम्यमेवेति स्पष्टम्।

**अतिशयोक्तिः—**

इयं चतुर्धा। यत्रोपमेयस्य पृथगनिर्दिष्टस्योपमानेनाहार्याभेदनिश्चयस्तत्र-प्रथमा। यत्र प्रकृतस्यान्यत्वेन वर्णनं तत्र द्वितीया। यत्र यद्यर्थस्योक्तौ सत्याम् असम्भविनोऽन्यस्यार्थस्य कल्पनं तत्र तृतीया। यत्र च कार्य-कारण पौर्वापर्य-रूप-क्रमविपर्ययस्तत्र चतुर्थी। कार्य-कारणयोः पौर्वापर्यविपर्ययोऽपि द्विधा-यत्र कार्यस्य प्राक्कारणस्य पश्चाद्भवनोक्तिस्तत्राद्या। कार्य-कारणयोः समकालत्वे च द्वितीया। एतच्चतुष्टयान्यतमत्वमेवातिशयोक्तित्वमिति केचित्। वस्तुतोऽतिश-

योक्तिपदार्थ एवातिशयोक्तिलक्षणम्। अतिशयिता उक्तिरतिशयोक्तिरितियौगिकार्थः। एवं पङ्कजादिवदतिशयोक्तिपदं योगरूढम्। यथा पंकजपदं योगेन पङ्कजनिकर्तृत्वं रूढ्या च कमलं बोधयति तथैवातिशयोक्तिपदं योगेनातिशयामुक्तिमतिशयोक्त्यलंकारञ्च। योगेनैव अतिशयिताया उक्तेर्लक्षणस्य बोधे सिद्धे काव्यप्रकाशेऽतिशयोक्तेरलङ्कारस्य सामान्यं लक्षणं नाभिहितम्, केवलं भेदा एव निरूपिताः।[1] अतिशयितोक्तिरूपं सामान्यलक्षणं सर्वेषु भेदेषु अनुस्यूतमेव। रूपकेऽध्यवसानं साध्यं निगीर्यमाणमिति यावत्। विषयस्य पदोपात्तत्वात्। अत्र तु तत् सिद्धं निगीर्णमिति यावत्। विषयवाचकपदाऽप्रयोगात्। उभयत्राभेदप्रतीतिः। किन्तु रूपके निगीर्यमाणस्य विषयस्य विषयिणा सा, अतिशयोक्तौ च निगीर्णस्य तस्य विषयिणा तथा। इति रूपकातिशयोक्त्योर्भेदः। पूर्वत्र सारोपाऽन्यत्र च साध्यवसाना लक्षणेति विवेकः।

प्रथमातिशयोक्ति र्भेदेऽभेदकल्पनरूपा। द्वितीया चाभेदे भेदकल्पनलक्षणा। तृतीया चासम्बन्धे सम्बन्धकल्पनरूपा। चतुर्थी च कार्यकारणयोः पौर्वापर्यक्रमविपर्ययरूपा द्विधोक्तैव। इत्थं काव्य-प्रकाश कृतामाशयः।

विषयिणा विषयस्य निगरणमतिशयः। तस्योक्तिरतिशयोक्तिरिति पण्डितराजः। एतन्मते निगीर्याध्यवसानरूपैकैवातिशयोक्तिः। अन्ये भेदा अनुगतरूपाभावात् पृथगलंकाराः।[2] ननु भेदेनाभेदस्य, सम्बन्धेनासम्बन्धस्य, असम्बन्धेन सम्बन्धस्य कार्यकारणपौर्वापर्यविपर्ययेण च तत्पौर्वापर्यक्रमस्य निगरणेन सर्वत्र निगीर्याध्यवसानं सिद्धम्। ततोऽनुगतरूपत्वं सर्वत्र भेदेषु अक्षतमिति चेन्न। यतोहि वास्तविकं वस्तु यद्यन्यत्वेन न वर्ण्येत तर्हि चमत्कारो न स्यात्। एवं भेदेनाभेदस्य निगरणाभावे अभिन्नं वस्तु भिन्नं न प्रतीयेत, किन्तु तद्रूपमेव प्रतीयेत। ततश्चमत्कारानुभवोऽसंगतः स्यात्। तस्मादिदं स्वतः प्राप्तं निगरणं नवीनतया अलंकारस्थानीयम्। इत्थमेव सम्बन्धे सम्बन्धनिगरणादिष्वपि ज्ञेयम्। अत एवंविधं निगरणं नाऽलंकारेषु गणनार्हम्। न च चतसृष्वतिशयोक्तिषु चतुष्टयान्यतमत्वं लक्षणमनुगतमिति वाच्यम्, तस्याप्रयोजकत्वात्। अन्यथातिशयस्य सर्वालंकारेषु सत्त्वेन

---

१. अत्रातिशयोक्तिपदे योगानुसारेण सामान्यलक्षण-लाभ इति न पृथगभिधानम्।" —का० प्र० वा० टी०, ६२८ पृ०।

२. निगीर्ध्यावसानमेवातिशयोक्तिः। प्रभेदान्तरं त्वनुगतरूपाभावादलंकारान्तरमेव। —र० गं०, गु० म० टी० स० टी० सहि० ४१८ पृ०।

सकलालंकारान्यतमत्वमिति लक्षणं करणीयं स्यात्, उपमादयोऽतिशयोक्तेरेव भेदा इति कथनापत्तिश्च तथा। तस्मान्निगीर्याध्यवसानातिरिक्तस्थलेषु अलंकारान्तरमेव स्वीकार्यम्। न चान्येषामतिशयोक्तिभेदानामलंकारान्तरत्वे गौरवमिति वाच्यम्। अत्राक्लृप्तपदार्थकल्पनाभावेन गौरवाभावात्। प्रधानोत्कर्षकत्वरूपमलंकारत्वं क्लृप्तमेव। तस्मान्निगीर्याध्यवसानरूपैकैवातिशयोक्तिः।

अतिशयोक्तौ विषयितावच्छेदकचन्द्रत्वादिनैव विषयस्य भानं न तु विषयिचन्द्राभिन्नत्वेन मुखादेर्विषयस्य तत्। अर्थात् "चन्द्रः" इत्युक्तौ विषयितावच्छेदक चन्द्रत्वविशिष्टस्य लक्ष्यस्य विषयमुखस्य भानम्, न तु तस्य चन्द्राभिन्नत्वेन तत्।[१] विषयनिरूपितविषयिवाचकपदनिष्ठाया लक्षणायाः कार्यतावच्छेदकं शक्यतावच्छेदकचन्द्रत्वादिमात्र-प्रकारकलक्ष्य-मुखादिविशेष्यकबोधजनकत्वम्। अतो लक्ष्यतावच्छेदकस्य मुखत्वादेरभानेन शक्यतावच्छेदकस्य चन्द्रत्वादेश्च भानेन न विरोधः।

**तुल्ययोगिता :—**

"नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता" इति मम्मटः। अत्र "धर्मः" इत्यनन्तरं "यदुपादीयते" इति शेषः। पूर्वसूत्रतो "वृत्तिः" इत्यनुवर्तते। तच्च "अर्थवशाद्विभक्ति-परिणामः" इति न्यायेन "वर्त्यते" इति परिणम्यते। उपादीयते इति तदर्थः। पुनः शब्दस्त्वर्थे। ततो नियतानां प्रकृतानामेवाप्रकृतानामेव वा गुण-क्रियादिरूपो धर्मः साधारणतः सकृद् यदुपादीयते, सा धर्मस्य सकृदुपादानरूपा तुल्ययोगितेत्यर्थः। तुल्ययोगितेति संज्ञान्वर्था। तुल्यश्चासौ योगः सम्बन्धस्तुल्ययोग एकधर्मान्वय इति यावत्। सोऽस्त्येषां प्रकृतानामेवाप्रकृतानामेव वेति ते तुल्ययोगिनः। तेषां भावस्तुल्ययोगितेति व्युत्पत्तिः।

"प्रकृतानामेवाप्रकृतानामेव वा गुणक्रियादिरूपैकधर्मान्वयस्तुल्ययोगिता" इति रसगङ्गाधरकारस्य तुल्ययोगितालक्षणं मम्मटोक्त-तल्लक्षणतो नातिरिच्यते।

**दीपकम् :—**

उपमानोपमेयानां प्रकृताप्रकृतपदवाच्यानां गुणक्रियाधर्मस्य नानाक्रियासु कारकस्य च सकृदुपादानं दीपकम्। इत्थं मम्मटेनोक्तम्—

---

१. एवं च निगरणे सर्वत्रापि विषयितावच्छेदकधर्मरूपेणैव विषयस्य भानम्, न विषय्यभिन्नत्वेन। —तत्रैव ४१४ पृ०।

"सकृद्वृत्तिस्तु धर्मस्य प्रकृताऽप्रकृतात्मनाम् ।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥"

यथा प्रासाद आरोपितो दीपो रथ्यामपि उपकरोति तथा प्रस्तुतैकनिष्ठः समानो धर्मः प्रसंगादन्यत्रापि तथेति दीपसाम्यादस्यालंकारस्य दीपकमिति नामान्वर्थम् । दीप इव दीपकमिति तद्-व्युत्पत्तिः ।"संज्ञायाम् च" इति सूत्रेण प्रकृतिप्रत्ययसमुदायेन संज्ञायां ज्ञायमानायामिवार्थे कन् ।

अत्र पण्डितराजस्याक्षेपः—

"सकृद्वृत्ति स्तुधर्मस्य प्रकृताप्रकृतात्मनाम् ।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥"

इति दीपक-लक्षण मुक्तं तन्नरमणीयम् । पूर्वार्द्ध कथित-प्रथमदीपकलक्षणेनैव द्वितीयदीपकस्यापि सङ्ग्रहेणोत्तरार्धद्वितीयलक्षणस्य व्यर्थत्वात् । गुणिनां कारकाणाञ्च गुण-क्रियारूपधर्मस्य सकृदुपादानस्थले यथा दीपकत्वम्, तथा क्रियाणामपि कारकरूपधर्मस्य सकृदुपादानस्थले तत् । तस्मात् "प्रकृताप्रकृतात्मनां चैकसाधारणधर्मान्वयो दीपकमित्येव लक्षणं रम्यम् । स धर्मः क्वचिद् गुणक्रियादिरूपः क्वचिच्च कारकरूप इति त्वन्यत् । न च प्रकृताप्रकृतात्मनां धर्मस्य सकृद्वृत्तिर्दीपकमिति प्रथमदीपकलक्षणतो कारकदीपके विशेषः, क्रियाणां प्रकृतत्वे अप्रकृत्वे वापि कारकस्य सकृद्वृत्तित्वे दीपकाङ्गीकारादिति वाच्यम्, क्रियाणां प्रकृताप्रकृतात्मकताविरहेऽपि शुद्धप्रकृतत्वे शुद्धाप्रकृतत्वे वा दीपकत्वाङ्गीकारे कारकतुल्ययोगितोच्छेदापत्तेः । न चेष्टापत्तिः । सकलालंकारिकसिद्धान्तविरोधापत्तेः । न च तत्रापि सेति वाच्यम्, तादृशलक्षण-द्वयस्याननुगतत्वात् । तादृशलक्षण-द्वयान्यतरत्वस्य लक्षणत्वे गौरवात् । न चागत्या गौरवस्वीकारे दोषाभाव इति वाच्यम् । अन्यतमत्वेन सर्वेषामैक्ये उपमा द्युच्छेदापत्तेः । अर्थात् यथा तादृशलक्षणद्वयान्यतरत्वं दीपकत्वमित्याख्यायते तथा उपमारूपकादिलक्षणान्यतमत्वं दीपकत्वमिति प्रतिपक्षिणोक्ते सर्वेषामुपमारूपकाद्यलंकाराणां च दीपकभेदत्वसाधनेऽन्यालंकाराणां व्यपदेशोच्छेदः स्यादित्याशय इति सरला । किञ्च दीपकतुल्ययोगितादौ प्रतीयमानमौपम्यं सकलालंकारिकसम्मतम् ।

"स्विद्यति कूणति वेल्लति विचलति-
निमिषति विलोकयति तिर्यक् ।

अन्तर्नन्दति चुम्बितुमिच्छति

नवपरिणया वधूः शयने"

इत्यत्र कारकदीपकत्वेनोदाहृते पद्ये क्रियाणां शुद्धप्रकृतानां स्वेदनकूणनादीनामेककारकान्वितानामौपम्यं न कविसंरम्भगोचरः। तस्मादत्र समुच्चयालंकारच्छाया समुचिता। यदि शुद्धप्रकृतानां स्वेदनादीनामौपम्यं प्रतीयत एवेत्याग्रहस्तदापि नात्र कारकदीपकत्वमुचितम्। क्रियाणां शुद्धप्रकृतत्वेन कारकतुल्ययोगिताव्यपदेशस्यैवोचितत्वम्।

एतदाक्षेपनिराकरणम्:—

पण्डितराजस्य मम्मट-तुल्ययोगितालक्षणे कृतोऽयमाक्षेपो निरस्त उद्योते। "सैव क्रियासु बह्वीषु कारकस्येति दीपकम्" इति द्वितीयदीपकलक्षणोक्त-क्रियाशब्देन तिङ्पदवाच्यानां साध्यभूतानां क्रियाणां ग्रहणम्। साध्यानां चासामुपमानत्वं महाभाष्ये निरस्तम्। अतो नात्रौपम्यप्रतीतिः। प्रथमदीपक एव तत्प्रतिपत्तिः। इति प्रथमदीपकतो द्वितीयदीपके भेदः। कारकदीपकातिरिक्तदीपक एवौपम्यप्रतीतिः सकलालांकारिकसम्मता। इदं कारदीपकं प्रकृतानामेवाऽप्रकृतानामेव प्रकृताप्रकृतानामेव च क्रियाणां कारकस्य सकृद्वृत्तित्वे भवति। दीपसाम्येनास्यापि दीपकपदेन व्यवहारः। अत्र समस्तक्रियासम्बद्धत्वं कारकस्य सिद्धमेव। प्रासादारोपितो दीपः प्रासादस्थानपि सर्वान् पदार्थानवभासयति। अतो दीपकतोऽस्य पृथग्भावे नास्तिनिमित्तम्। अतो न कारकदीपकं कारकतुल्ययोगिता।[१]

---

१. अत्र कारकस्य क्रियासु "इत्युक्त्या क्रिया तिङन्तादिवाच्या सत्त्वभूता गृह्यते, असत्त्वभूतायाश्चोपमानत्वाभावः सन्-सूत्र भाष्ये" न वै तिङन्तेनोपमानमस्ति "इति ग्रन्थेन प्रतिपादित इति, अत्रोपमानोपमेयभावाप्रतीतिः पूर्वस्मिंस्तु तत्प्रतीतिरिति भेदः। एककर्तृकत्वादिधर्मकृतसादृश्यस्याचमत्कारित्वाच्च।" इदं च दीपकं प्रकृतानामेवाप्रकृतानामेव प्रकृताप्रकृतानां च। अनेकचमत्कारिक्रियावैशिष्ट्येन वर्ण्यकारकोत्कर्षकतया चमत्कारित्वेनास्यालंकारत्वम्। एतेन दीपके सर्वत्रौपम्यस्य गम्यत्वादस्य दीपकत्वं चिन्त्यम्, स्विद्यतीत्युदाहरणे क्रियाणां सादृश्यावगतावपि सर्वासां प्रकृतत्वात्कारकतुल्ययोगितात्वमेवोचितमिति च परास्तम्। तुल्ययोगिता त्वौपम्यगर्भैवेति वक्ष्यते।" —उद्योते दीपक प्रकरणे।

**तुल्ययोगितादीपकविषय आलोचना :—**

पण्डितराजा तुल्ययोगितातो दीपकस्य पार्थक्यं खण्डयामासुः। तन्मते तुल्ययोगिताया एव त्रयो भेदाः, प्रकृतानामेवं धर्मस्य सकृद्वृत्तिः, अप्रकृतानामेव धर्मस्य सकृद्वृत्तिः प्रकृताप्रकृतानामेव धर्मस्य सकृद्-वृत्तिश्च। एवं तृतीये भेदे दीपकमन्तर्भूतम्। प्रायोकाव्यप्रकाशकारादीनां दीपकस्य तुल्ययोगितातः पृथग्वचनमाग्रहमूलकमेव। उभयत्र धर्मसकृद्-वृत्तिमूला विच्छित्तिरविशष्टा। विच्छित्तिविशेषोपलम्भोऽलंकारविभाग्रहेतुः। न च तुल्ययोगितायां केवलप्रकृतत्वस्य केवलाप्रकृतत्वस्य च दीपके च प्रकृताप्रकृतत्वसत्त्वेन भेद इति वाच्यम्, तव मते तुल्ययोगिताया एव शुद्धप्रकृत-शुद्धाप्रकृतत्वाभ्यां भेदद्वयापत्तेः। सर्वेषामलंकाराणां च प्रभेदवैशिष्ट्येन च नानाभेदापत्तेः। न च दीपक औपम्यं वास्तवम्, तुल्ययोगितायाञ्च प्रकृताप्रकृतयोरुपमानोपमेयाभावात्। 'अन्यथा खमिवं जलं जलमिव खम्' इत्यत्र प्रकृतयोराकाशजलयोः परस्परामुपमानत्वमुपमेयत्वं चासङ्गतं स्यात्। एवं प्रतीपेऽपि। अतस्तुल्ययोगितायां प्रकृतानामेवाप्रकृतानामेव वोपमानोपमेयभावोऽन्योन्यमविरुद्धः। अतस्तुल्ययोगितागा एव तृतीयो भेदो भवदभिमतं दीपकमिति स्वीकार्यम्।

**प्रतिवस्तूपमा :—**

'प्रतिवस्तूपमा तु सा।

समान्यस्य द्विरेकस्य यत्र वाक्य-द्वये स्थितिः॥" इति काव्यप्रकाशकृत्। एकस्य साधारणधर्मस्योपमानोपमेयवाक्ययोश्शब्दभेदेन द्विरुपादानं यत्र तत्र प्रतिवस्तूपमा। एकस्यैव धर्मस्य पृथक्छब्दाभ्यामुपादानं वस्तु-प्रतिवस्तुभावो निगद्यते। अत्र वाक्यार्थयोरार्थमौपम्यं गम्यते। प्रतिवस्तु प्रतिवाक्यार्थमुपमा प्रतिवस्तूपमेति प्रतिवस्तूपमापदं निरुक्तं प्रभायाम्। "वस्तु-प्रतिवस्तुभावापन्नसाधारणधर्मकवाक्यार्थयोरार्थमौपम्यं प्रतिवस्तूपमा इति पण्डितराजस्य प्रतिवस्तूपमालक्षणं मम्मटलक्षणान्नातिरिक्तम्। उभयोः साम्यमेवेति स्पष्टम्।

**दृष्टान्तः—**

'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इति सूत्रे पूर्वसूत्रतः 'वाक्यद्वये' इति अनुवर्तते। प्रतिबिम्बनञ्च बिम्बप्रतिबिम्बभावः। बिम्ब शरीरं प्रतिबिम्वं छाया तयोर्भावो बिम्बप्रतिबिम्बत्वम्। आंकारप्रत्याकारतुल्यत्वमिति यावत्। एकस्यै-

वार्थस्य शब्दद्वयेनोपादानं वस्तुप्रतिवस्तुभावः । द्वयोरर्थयोर्द्विरुपादानं बिम्ब-प्रतिबिम्बभाव इति प्रतापरुद्रयशोभूषणे कथितम् । वस्तुतो भिन्नयोरप्युपमानोपमेय धर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं बिम्बप्रतिबिम्बभावः' । ततो वाक्यद्वय उपमानोपमेयधर्माणां सर्वेषां बिम्बप्रतिबिम्बभावो दृष्टान्त इतिसूत्रार्थः । प्रतिवाक्यं भिन्नस्यापि साधारणधर्मस्य तुल्यरूपतया वाक्यार्थयोरुपमासम्पादकत्वे दृष्टान्तालंकार इति विवरणकाराः । एवं काव्यप्रकाशकृत आशयः । प्रकृतवाक्यार्थघटकानामुपमानादीनां साधारणधर्मस्य च बिम्बप्रतिबिम्बभावे दृष्टान्त इति जगन्नाथः ।

**निदर्शना:—**

"निदर्शना

अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ।" इति मम्मटः

अभवन् प्रतीतिविषयतामलभमानोऽनुपपद्यमान इति यावद् वस्तुनो वाक्यार्थपदार्थयोरुपमापरिकल्पक उपमां परिकल्प्याक्षिप्य पर्यवसितः सम्बन्धोऽन्वयो निदर्शनेति सूत्रार्थः । अनुपपद्यमानो वाक्यार्थपदार्थान्यतरसम्बन्ध औपम्याक्षेपको निदर्शनेति भावः । एवमस्या द्वौ भेदौ-वाक्यार्थनिदर्शना पदार्थ-निदर्शना च । निदर्शनं दृष्टान्तकरणम् । निदर्शनं निदर्शनेति ण्यन्तपश्यतेर्भावे युच् ।

'उपात्तयोरर्थयोरार्थाभेद औपम्यपर्यवसायी निदर्शनेति पण्डितराजः । अत्रार्थपदेन वाक्यार्थ-पदार्थयोरुभयोर्ग्रहणम् । अतिशयोक्त्यादीनां ध्वन्यमानरूपकस्य च निदर्शनात्ववारणाय उपात्तयोः' इत्युक्तिः । न हि तत्रार्थावुपात्तौ । 'मुखं चन्द्रः' इत्यादौ रूपके वाच्येऽतिव्याप्तिवारणायाऽर्थपदोपादानम् । अत्रैकविभक्तिनिर्देश्यः शाब्द एवाभेदः । अभेदस्यार्थत्वं च प्राथमिकान्वयबोध-विषयत्वम् । इत्थमुपात्तयोः वाक्य-पदार्थयोरौपम्यपर्यवसायी अभेदो निदर्शनेति फलितार्थः ।

पण्डितराजस्येदं लक्षणं शाब्द्या निदर्शनायाः । आर्थ्यास्तस्या ललितालंकार प्रकरण उक्तम् । तस्या लक्षणं च "व्यवहार द्वयवद्धर्म्यभेदप्रतिपादनाक्षिप्तो व्यवहारद्वयाभेदो निदर्शना" इति प्रोक्तम् । आर्थनिदर्शनास्थलेऽप्पयदीक्षितस्य ललितालङ्कारो रसगङ्गाधरता खण्डितः । एतद्विषये विचारः करिष्यते ललितालंकारप्रकरणे । मम्मटस्य निदर्शनालक्षणं शाब्दार्थनिदर्शनासाधारणम् । पण्डितराजस्य शाब्द्या आर्थ्यांश्च पृथग्लक्षणनिर्माणे ललितालंकारनिरूपणं तत्खण्डनं च बीजम् । आर्थी निदर्शना न समेषां मते, इत्थं पृथग्लक्षणनिर्माणमिति यावत् ।

मम्मटमते निदर्शना द्विधा-अभवत्सम्बन्धरूपा भवत्सम्बन्धरूपा च । आद्याया एव लक्षणं प्रागुक्तम् । अपरस्याश्च—

"स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च सा परा" इति । यत्र क्रिययैव स्वस्य स्वहेतोश्चान्वयो हेतुहेतुमद्‌भावरूपः ख्याप्यते सापरा निदर्शना इति प्रदीपः ।

उदाहरणञ्च—

"उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ।।"

इति पद्यम् । अत्र पतेत्पदप्रतिपाद्यस्य पातरूपकार्यस्य लाघवे सत्युन्नतपद प्राप्तिरूपस्य कारणस्य च कार्यकारणभावरूपः सम्बन्धः पतति-पदप्रतिपाद्येन स्वेन पतनरूपकार्येण प्रतिपाद्यते । 'लघोरुन्नपद-प्राप्तिरधः-पातहेतुर्यथा दृषत्कणस्य' इति उपमायां पर्यवसानादस्यापि निदर्शनात्वमेव । अत्र कार्यकारणभावरूपस्य सम्भवतः सम्बन्धस्य सत्ता । एवमिह सम्भवद्वस्तुसम्बन्धनिबन्धना निदर्शना । पूर्वत्र तु असम्भवद्वस्तुसम्बन्धनिबन्धना सेति भावः ।

एतद्वितीय-निदर्शनाविषये रसगङ्गाधरकृत आहुर्यद्वैयाकरणनय एव 'उन्नतं पदम्' इत्यादि श्लोकस्थले निदर्शनात्वं सम्भवति, न तु प्रथमान्तार्थमुख्यविशेष्यक-शाब्दबोधिनां मते । तथाहि 'धातुनोक्तक्रिये नित्यं कारके कर्तृतोच्यते' इति नयेन वैयाकरणनये प्रकृत-धातूपात्तव्यापाराश्रयः कर्ता । अतः प्रोक्तपद्ये दृषत्कणेऽपि ब्रूधातूपात्तवदनानुकूलव्यापाराश्रयत्वरूपस्य कर्तृत्वस्य सम्भवेन सम्भवद्वस्तुसम्ब-न्धनिबन्धना निदर्शना । न्यायनये कृञ् यत्नार्थकः, ततः तृचि निष्पन्नस्य कर्तृपदस्य यत्नाश्रयोऽर्थः । सविषयकधातूत्तरवर्ति-तृजादिकर्तृप्रत्ययस्याश्रयत्वे निरूढक्षणाया अङ्गीकारात् । स एव च कर्ता कर्तृप्रत्ययानां मुख्यार्थः । अतोऽचेतनस्य दृषत्कणल-क्षणस्य यत्नाश्रयत्वरूप-वचनकर्तृत्वस्यासम्भवेनात्र सम्भवद्वस्तु सम्बन्धत्वं नोपप-द्यते । अत एतादृश-स्थले ब्रुवन्निव इतीवपदाक्षेपेण प्रतीयमानोत्प्रेक्षैव । न तु निदर्शना । वैयाकरणनये कर्तृत्वस्य सम्भवेन नेवपदाक्षेपः । यत्र वस्तुनः स्वतः सम्भवोनुपपन्नस्तत्रैव प्रतीयमानोत्प्रेक्षा । यथा "व्यालिम्पति तमोङ्गानि नभो वर्षति कज्जलम्" इत्यत्र तमोनभसोरङ्गलेपन-कज्जलवर्षणयोरसम्भवात् । 'उन्नतं पदम्' इत्यादौ वैयाकरणमते दृषत्कणस्य तादृशवचनकर्तृत्वं स्वतः सिद्धमिति न तत्रेवप-दाक्षेपेणोत्प्रेक्षा प्रतीयमाना । न्यायनये तु सैव । पण्डितराजस्यापि मते नेयं द्वितीया निदर्शना । यत्र तत्र तेन नैयायिकमतस्य समर्थनात् । अतएव अस्य शाब्दनिदर्शना-

वल्लक्षणं न विहितम् । अत एतन्मतेऽप्यत्र 'उन्नतं पदम्' इत्यादिपद्ये प्रतीयमानोत्प्रेक्षैव । नैयायिकमतस्वीकार एतासम्भवद्वस्तु-सम्बन्धनिबन्धना प्रागुक्ता निदर्शना सङ्गच्छते । तथाहि—

'दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्ग-
मादातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलङ्घयिषति ध्रुवमेष देव
यस्ते गुणान् गदितुमुद्यममादधाति ॥'

इति पद्यं मम्मटेन मालारूपनिदर्शनायामुदाहृतम् । निदर्शनायां वाक्यार्थयोः पदार्थयो र्वार्थाभेदो दृष्टः । वैयाकरणमते यत्कर्तृकत्वत्सम्बन्धिगुणवर्णनोद्देश्यको द्यमाधानं तत्कर्तृकबाहुकरणसमुद्रतरणेच्छादिभ्योऽभिन्नमिति शाब्दबोधे जाते-पश्चादुपमायां पर्यवसानम् । अत्राभेदः शाब्द एव । भावनाविशेष्यकशाब्दधीवादिनां वैयाकरणानां मते क्रिययोरेवाभेदस्य प्रतीतेः । कर्त्रोरभेदोऽत्रार्थः । अत एतादृशस्थल एषां मते वाक्यार्थरूपकमेवालंकारः । न्यायनये तु यस्त्वत्सम्बन्धिगुणवर्णनोद्देश्यको द्यमाधानानुकूलकृतिमान् स बाहुकरणसमुद्रकर्मकतरणेच्छानुकूलकृत्याश्रय इति बोधे कर्त्रोरभेदश्शाब्दः, क्रिययोश्चार्थः । वैयाकरणनय एतद्वैपरीत्यम् । अतो न्यायनये क्रिययोरार्थाभेदप्रतिपत्तेरत्र निदर्शना युक्ता, न तु वैयाकरण-नये ।

काव्य-प्रकाश टीकाकारै र्वैयाकरणनये अपि एतादृशपद्ये निदर्शनैव साधिता, निरस्तं च वाक्यर्थरूपकम् । वाक्यार्थ-पदार्थयोरार्थ एवाभेदो न तु शाब्द इति नियमोऽपि नाङ्गीकृतः । शाब्द्यां निदर्शनायां शाब्दोऽभेद आर्थ्यां च आर्थः ।[१] रूपके

---

१. त्वत्पादनखरत्नानि यो रञ्जयति यावकैः ।
इन्दुं चन्दनलेपेन पाण्डरीकुरुते हि सः ॥
एवं त्वत्पादनखरत्नानां यदलक्तमार्जनम् ।
इदं श्री खण्डलेपेन पाण्डरीकरणं विधोः ॥
इत्यत्राप्येषैव न चेदं वाक्यार्थ रूपकम् ।
लोकप्रसिद्धोपमानत्वोपमेयत्व-
वतोरभेदस्यैव रूपकत्वात् । किञ्च तत्र सादृश्यलक्षणामूलाभेद प्रतीतिः, इह तु प्रतीयमानाभेदानुपपत्त्या तत्त्वकल्पनेति भेदात् । —का० प्र० वा० टी० ६१५ पृ० ।

गुणवृत्तिमूलाभेदप्रतीतिः । अत्र च गम्यमानाभेदेन सादृश्यकल्पनेति रूपकादस्य विशेषः । रूपके गुणवृत्तेरवस्थानमन्यत्रापि प्रोक्तम् ।[१]

**व्यतिरेकः—**

'उपमानाद् यदन्यस्य व्यंतिरेकः स एव सः' इति काव्यप्रकाशकारः । व्यतिरेक आधिक्यम् । तच्च गुणविशेषकृत उत्कर्षः । तथा चोपमानादुपेयस्य गुणविशेषकृत उत्कर्षो व्यतिरेकालंकारः । सर्वत्रोत्कर्ष एव व्यतिरेकः, न तु न्यूनतायामपि उपमानादुपमेयस्य । गुणविशेषेणातिरेको व्यतिरेक इति योगेनैव लक्षणलाभः । एवमेव पण्डितराजोऽप्याह—

'उपमानादुपमेयस्य गुणविशेषत्वेनोत्कर्षो व्यतिरेकः' इति । एतदलंकारविषये न मतविभिन्नता । उदाहरणानि ग्रन्थेषूक्तान्येव ।

**सहोक्तिः—**

गुणप्रधानभावावच्छिन्नसहार्थ-सम्बन्धः सहोक्तिरिति रसगङ्गाधरकृत् । गौण-प्रधानयोरर्थयोः सहार्थसम्बन्धः सहोक्तिरिति तदर्थः । तस्य हृद्यत्व एवालंकारत्वम् । हृद्यत्वं चात्र प्राचो मते कार्यकारणपौर्वापर्यविपर्यय-श्लेषभित्तिकाभेदाऽध्यवसान-शुद्धाभेदाऽध्यवसान रूपत्रिविधातिशयोक्तिमूलम् । इयं च सहोक्तिर्द्विधा-वाच्या प्रतीयमाना च । सहादिपदोपादान आद्या तदनुपादने चापरा । न च

"केशैर्बधूनामथ सर्वकोषैः
प्राणैश्च साकं प्रतिभूपतीनाम् ।
त्वया रणे निष्करुणेन राजं-
श्चापस्य जीवा चकृषे जवेन ॥"

इत्यादौ सह-पद-प्रयोगाभावे गुणवाचकैः केशादि शब्दैः "सहयुक्तेऽप्रधाने" इति सूत्रेण तृतीयानापत्या कथं सहोक्तिरिति वाच्यम् । 'वृद्धो यूना' इति निर्देशेन सहादिप्रयोगाभावेऽपि तृतीया-प्रवृत्तेर्ज्ञापनेन गुणभावस्यावश्यं प्रतिपत्तेः । न चाप्रधानभावस्य कथं शाब्दत्वम्, क्रियाद्यन्वितारूपस्य तस्यार्थत्वात् सहपदोपादाने तदनुपादाने चोभयथा तस्य शाब्दत्वाभावाद् इति चेन्न, 'अयमस्मिन् नगरे प्रधानं

१. श्रुत्या सम्बन्धविरहात् यत्पदेन पदान्तरम् ।
गुणवृत्तिप्रधानेन युज्यते रूपकं तु तत् । —काव्या० सा० सं० ल० वृ० २६८ पृ० ।

मुख्य:' इत्यापामरोल्लिखित-व्यवहारबीजस्य सखण्डस्याखण्डस्य वा प्रधानत्वस्य सिद्धतया तदभावरूपेऽप्रधानत्वे 'सहयुक्तेप्रधाने' इति सूत्रेण तृतीया: शक्तेर्बोधनात्तस्य शाब्दत्वस्य सिद्धत्वात्। न च 'सहयुक्तेऽप्रधाने' इति शास्त्रेण 'सहार्थयोगेऽप्रधाने तृतीया, न तु अप्रधानेऽर्थे वाच्ये' इति बोधनेनाप्रधानभावस्य तृतीययाऽबोध्यतया तस्याशाब्दत्वमिति वाच्यम्, 'अप्रधानत्वेऽर्थे वाच्ये' इत्येव तस्य सूत्रस्यार्थात्। अन्यथाऽप्रधानग्रहणमनर्थकं स्यात्। न चाप्रधानग्रहणाभावे पुत्रेण सहागत: पिता' इत्यादौ पित्रादावपि प्रधाने तृतीयापत्तिरिति वाच्यम्, पित्रादिभ्योऽन्तरङ्गत्वात् प्रथमोत्पत्तेरेवौचित्यात्। न च तत्र प्रथमाया अन्तरङ्गत्वेन तृतीयाऽपत्तेर्वारणेऽपि 'पुत्रेण सह पितुरागमनम्' इत्यत्र पितुस्तृतीयापत्तिरिति - वाच्यम्। 'सहयुक्तेऽप्रधाने' इतिसूत्रविहितोपपदविभक्तितृतीयात: 'कर्तृकर्मणो: कृति' इतिविहितकारकविभक्ते: षष्ठया: प्राबल्येन तत्रापि तृतीयाया अप्रसक्ते:। यदि अप्रधानपदस्य तत्र "अप्रधानादेव तृतीया न तु प्रधानात्"इति तात्पर्यग्राहकताङ्गीकार आग्रहोऽतो न तद्वैयर्थ्यमिति क़थ्यते तदा शेषे षष्ठी 'इत्यत्रापि' विशेषणादेव राजादे: षष्ठी, न तु विशेष्यात् पुरुषादे: 'इति तात्पर्यग्राहणार्थं' विशेषणपद ग्रहणापत्ति:। अत: सहयुक्तेऽप्रधाने इत्यत्राप्रधानपदस्य नोक्ततात्पर्यग्राहकता। अपितु अप्रधानेऽर्थे वाच्ये तृतीयेति तत्सूत्रार्थ:। 'हेतौ तृतीया' इति सूत्रं यथा हेतु-शक्तिग्राहकं तथेदमपि सूत्रमप्रधानशक्ति-ग्राहकम्। प्रकृत्यर्थस्य पुत्रादेरभेदेन प्रत्ययार्थेऽप्रधानेऽन्वय:। न च' पुत्रेण सह पिता गत:' इत्यत्र पुत्राभिन्नाप्रधानसहित: पितेति बोधोऽप्रामाणिक इति वाच्यम्, 'दण्डेन घट:' इत्यत्र दण्डनिष्ठजनकतानिरूपितजंन्यतावान् घट इति बोधस्य सार्वजनीनत्वेऽपि 'हेतौ तृतीया' इति शास्त्रबलेन दण्डाभिन्नहेतुको घट इति बोधस्य कल्पनवदिहापि तादृशबोधकल्पने विरोधाभावात्। तस्मादप्रधानभावस्य वाच्यत्वमेव। धर्मिशक्तावपि कर्मत्वादीनामिवास्यापि शाब्दत्वमव्याहतम्।

एवमप्रधानभावस्याशाब्दत्वं खण्डितं पण्डितराजेन। अस्यैतद्विचारो नागेशेन कटाक्षित:।[१]

---

१. अत्रेदं सर्वं चिन्त्यम्. अप्रधानग्रहण-प्रत्याख्यानपरमाष्यविरोधापत्ते:, अप्रधानभृत्यै: सह गतो राजा इत्यत्र तृतीयानापत्तेश्च। राज्ञा सह सेनागच्छतीत्यादौ तृतीयापत्तेश्च अन्तरङ्गत्वस्य दुर्वचत्वेन तथोक्तेरसांङ्गत्याच्च। बोधस्यान्यथा इष्यमाणत्वाच्च। सहोक्तिलक्षणं च यत्रैकस्य शाब्द:क्रियान्वयोऽपरस्य सहार्थबलादार्थ:सा सहोक्तिरिति

'केशैर्वधूनाम्' इत्यादौ केशादीनां जीवायाश्च आकर्षणयोः कार्यकारणयोः सहभाववर्णनेन कार्यकारणपौर्वापर्यविपर्यमूलातिशयोक्तिरेव चमत्कारिणी। अतस्तत्र सहोक्तेरङ्गीकारोऽनुचितः। तस्याः स्वतश्च मत्कृत्यनाधायकत्वेन नाममात्रतोविद्यमानत्वात्। न च "तव कोपोऽरिनाशश्च जायते युगपन्नृप" इत्यत्रत्याऽतिशयोक्तेरिव "तव कोपोऽरिनाशेन सहैव नृप जायते" इति पद्ये सहोक्तौ शत्रुनाशनिष्ठगुणभावकृतवैलक्षण्यस्य सत्त्वेन तस्यामस्या अन्तर्भावोऽनुचित इति वाच्यम्। गुणभावमात्रवैलक्षण्यस्य चमत्काराप्रयोजकत्वात्। चमत्कार-निदानभेदस्यैवालंकारविभाजकत्वात्। न च सादृश्यानुप्राणितानां रूपकादीनामप्युपमातः पृथग्भावानुपपत्तिरिति वाच्यम्। 'निशाकरसमानोऽयमयं साक्षान्निशाकरः' इत्यत्रोपमातो रूपकस्य चमत्कारजनने विशेषस्योपलम्भात्। अन्यथा व्यतिरेकस्योत्थानं न स्यात्। अत्र व्यतिरेकः स्पष्ट एव। यथा सादृश्यमूलेषु रूपकादिषु सादृश्यस्य गुणीभावेन रूपकादिभ्यो न पृथग्व्यपदेशस्तथा सहोक्तिजनिताया अतिशयोक्तेः सकाशादस्या अपि पृथगलंकारक्त्वव्यपदेशोऽनुचितः। तस्माच्छ्लेषभित्तिक-शुद्धाभेदाध्यवसानरूपातिशयद्वयानुप्राणिताया एव सहोक्तेरलंकारत्वम्। न चाभेदाध्यवसानस्थले अपि अतिशयोक्तेः सत्त्वे न सहोक्तिविषयवहार इति वाच्यम्। तत्रातिशयोक्त्योपस्कृतायाः सहोक्तेरेव प्राधान्यात्। 'प्राधान्येन व्यपदेशा भवन्ति' इति नयेन सहोक्तेरेवालंकारत्वेन व्यपदेशः, नत्वतिशयोक्त्या। वस्तुतस्तत्र नातिशयोक्तिरपित्वतिशयः। स पस्पराभेदाध्यवसानम्। एतादृशोतिशयः श्लेषादावपि। अतिशयमात्रं सर्वेषामलंकाराणामुपस्कारकम्। न ह्यभेदाध्यवसानमन्तरा "शोभते चन्द्रवन्मुखम्" इत्यादवुपमाया उन्मेषः। चन्द्रमुखशोभयोर्भिन्नत्वात्। तस्मात् कार्यकारण-पौर्वापर्यविपर्यमूलः सहोक्तेः प्रकारो निरस्तः। श्लेषमित्तिकाभेदाध्यवसानेन शुद्धाभेदाध्यवसानेन चानुप्राणिताया एव सहोक्तेलंकारत्वमिति पण्डितराजस्य हृदयम्।

**"त्वयि कुपिते रिपुमण्डलखण्डन-पाण्डित्य-संपदुद्दण्डे।**
**गिरिगहनेऽरिवधूनां दिवसैः सह लोचनानि वर्षन्ति।"**

इत्यत्र सहोक्तिश्श्लेषमूलाभेदाध्यवसानानुप्राणिता। "वर्षवदाचरन्ति वर्षणं कुर्वन्ति" इत्याकारकार्थद्वयप्रतिपादके वर्षन्तिपदे श्लेषस्य सत्त्वात्।

---

काव्यप्रकाशकृतामेवोक्तिः।' —गु० म० प्र०, ४८५-८६ पृ०

"पद्मपत्रैर्नृणां नेत्रैः सह लोकत्रयश्रिया।
उन्मीलन्तो निमीलन्तो जयन्ति सवितुः कराः"

इत्यत्र शुद्धाभेदाध्यवसानमूला सा। पद्मपत्रनेत्रादिनिष्ठयोरुन्मीलननिमीलनयोर्वस्तुतो भिन्नयोरपि प्रकटत्वाप्रकटत्वाद्यनेकधर्मवत्तयाऽभेदाध्यवसानस्यसत्त्वात्। अत्र श्लेषाभावः स्फुटः।

काव्यप्रकाशकाराः "सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्" इति सहोक्तिलक्षणमभिधाय एकार्थाभिधायकमपि सहार्थबलात् यत् उभयस्याप्यवगमकं सा सहोक्तिः, इति व्याचख्युः। शब्दशक्त्या एकान्वय्यर्थाभिधायकमपि पदं सहशब्दार्थान्वयबलाद्यदुभयान्वय्यर्थस्य बोधकं सा सहोक्तिरिति सूत्रार्थः। सहभावस्य साहित्यस्य उक्तिः सहोक्तिरित्यन्वर्थेयं संज्ञा। अलंकारचूडामणिनामके ग्रन्थे षष्ठेऽध्याये हेमचन्द्रः सहभावस्योक्तिः सहोक्तिः इति व्याजहार। मम्मटसूत्रप्रोक्तसहशब्दस्यार्थ एकजातीयैककालिकक्रियाद्यन्वयित्वसमनियतं साहित्यम्। 'पुत्रेण सह पिता आगतः' इत्यत्र पुत्रप्रतियोगिकसाहित्यवान् पिता आगत इति बोधः। तदनन्तरं पुत्रनिष्ठागमनसमानकालिकागमनवान् पितेति मानसो बोधः। शब्दशक्त्या एकार्थाभिधायकमपि पदमर्थद्वयवाचकं सम्पद्यते। क्रियापदं शब्दशक्त्या प्रथमान्तार्थ एव स्वार्थान्वयं बोधयति, विशेषणपदं च तया समानविभक्तिकनामार्थे स्वार्थान्वयम्।'[1] एवमेकं पदमेकार्थाभिधायकम्। किन्तु सहार्थबलेन तादृशमपि पदमुभयोरर्थयोः स्वार्थान्वयं बोधयति। तत्रैकत्र अन्वयबोधः शाब्दोपरत्र चार्थः। यथा 'पुत्रेण सह पिता गच्छति' इत्यत्र गच्छतिपदं सहार्थबलेन स्वार्थान्वयं पुत्रे पितरि च बोधयति। पुत्रे तदन्वयः सहार्थबलेन आर्थोऽपरत्र च शाब्दः। पितर्यन्वयबोधकत्वरूपसामर्थ्यस्य शब्दशक्तिजस्य गच्छतिपदे स्वतःसिद्धत्वात्। 'पुत्रेण सह पिता गतः' इत्यत्र गत इति विशेषणपदस्य पितृरूपसमानविभक्तिकनामार्थे स्वार्थान्वयबोधस्य सहार्थ-साहित्य-बलेन पुत्रेऽपि स्वार्थान्वयबोधकत्वम्। अन्वयबोधस्य शाब्दत्वमार्थत्वञ्च पूर्ववदेतादृशस्थले तृतीयान्तस्य गुणत्वं प्रथमान्तस्य च प्रधानत्वम्। "सहयुक्तेऽप्रधाने" इति सूत्रेण अप्रधाने तृतीयाया विहितत्वात्। गुणे सहार्थ-मर्यादा-लभ्यत्वेनार्थः प्रधाने च शाब्द एकधर्मान्वयः। एवं गुणप्रधानभावावच्छिन्नयोरर्थयोरार्थश्शाब्दश्च एकधर्मसम्बन्धः सहोक्तिः। तस्य सम्बन्धस्य

१. विशेषणपदस्य समानविभक्तिकनामार्थान्वयबोधकत्वसामर्थ्येन क्रियापदस्य च प्रथमान्तोपस्थाप्यान्वबयोधकत्वसामर्थ्येन चेत्यर्थः। —का० प्रदी० ३५७ पृ०।

हृद्यत्वेऽलङ्कारत्वमिति मम्मटसहोक्तिलक्षणनिष्कर्षः । सहोक्तेर्हृद्यत्वबीजं काव्यप्रकाशे नोक्तम् । किं कार्यकारणपौर्वापर्वविपर्यय-मूलातिशयोक्तिरपि बीजमिति वक्तुं न शक्यते । हृद्यत्वबीजस्य तेनानुपादानात् । तथापि तदुदाहरणेन गम्यते यत् कार्यकारण-पौर्वापर्य्यविपर्ययमूलातिशयोक्तिरपि सहोक्तेर्हृद्यत्वे बीजम् । तथाहि—

"सह दिबहणिशासाहिं दीहरा सासदण्डा
सहमणिबलयेहिं वाप्पधारा गलन्ति ।
तुव सुहअबिओए तीय उब्बिग्गिरीए
सह अ तणुलदाए दुव्वला जीविदासा ॥"

इति प्राकृतं पद्यमुदाहृतम् । आद्यचरणे श्वासदण्डगतं दीर्घत्वं शाब्दं दिवसनिशागतं चार्थम् । श्वासदण्डगत-दिवसनिशागत-दीर्घत्वयोर्वस्तुतो भिन्नयोरभेदाध्यवसानम् । तन्मूल एव चमत्कारः । द्वितीय-चरणे वाष्पधारागलनं शाब्दं मणिवलयगलनं चार्थं पूर्ववत् । अत्र कर्यकारणपौर्वापर्यविपर्ययात्मिकाऽतिशयोक्तिः सहोक्ति श्चमत्कारस्य बीजम् । यतो वाष्पपारागलनं करतानवसम्पादनद्वारा मणिबलयगलनस्य कारणम् । कार्यात् कारणस्य पूर्वभावः प्रसिद्ध एव । कारणात् कार्यस्य च पश्चाद्भावस्तथा । किन्त्वत्र द्वयोरेकदैव कथनेन कार्यकारणयोः पौर्वापर्यविपर्ययः स्पष्ट एव । चतुर्थ-चरणे तनुलतागत-जीविताशागतदौर्बल्ययोर्भिन्नयोरपि शुद्धाभेदाध्यवसानम् ।

न च मम्मटमते सहोक्तेर्लक्षणस्य "शशिना च निशा निशया च शशी शशिना निशया च विभाति नभः ।" 'इत्यादावन्योन्यालंकारेऽतिव्याप्तिः, विभातिपदस्य पूर्वत्र निशायां परत्र शशिनि च शाब्द-स्वार्थान्वयस्य पूर्वत्र शशिनि, परत्र निशायां च आर्थान्वस्य बोधकत्वेन द्विवाचकत्वादिति वाच्यम् । 'सहयुक्तेऽप्रधाने इतिविहित-तृतीयास्थल एव गुणप्रधानभावस्य प्रतीत्या तत्रैव सहोक्तेरङ्गीकारेणाऽत्र' 'हेतौ' इति सूत्रविहिततृतीयायाश्च सत्त्वेनातिव्याप्तेरभावात् । समुच्चय उभयान्वयौ शाब्दावेवेति तत्रापि नातिप्रसक्तिः ।

**विनोक्तिः—**

'विनोक्तिः सा विनान्येन यत्रान्यः सन्न नेतरः ।' इति मम्मटः । विनाभावस्य विनाशब्दार्थस्येति यावदुक्तिर्विनोक्तिरित्यन्वर्था संज्ञा । अतः पृथग्लक्षणं

नोक्तम्। तेन 'केनचिद् विना कस्यचिदशोभनत्वं शोभनत्वं वा प्रतिपाद्यते सा विनोक्तिः' इति प्रदीपः। नञ-निरादिसत्त्वेऽपीयमेव। 'विनार्थ-सम्बन्ध एव विनोक्तिः। तच्च विनाकृतस्य वस्तुनो रमणीयत्वारमणीयत्वाभ्यां भवति' इति पण्डितराजः। वस्तुत इहापि अन्यालंकारयोगकृतश्चमत्कार इति नास्या अलंकारान्तरत्वमिति बहूनां मतम्। तथा चोक्तं पण्डितराजेन-अलंकारान्तरसमालिङ्गनाविर्भूतमेवास्या हृद्यत्वम्, न स्वतः। तेनालंकारान्तरत्वमपि शिथिलमेवेत्यपि वदन्ति।

**समासोक्तिः—**

एतदलंकार विषये नाना विवादाः। तेषां दिग्दर्शनमत्र विधास्यते। सम्प्रति समासोक्तेः स्वरूपमुच्यते—

"परोक्तिर्भेदकैःश्लिष्टैः समासोक्तिः" इति मम्मटः। यत्र प्रस्तुतधर्मिको व्यवहारः साधारणविशेषणमात्रोपस्थापिताप्रस्तुतधर्मिकव्यवहाराभेदेन भासते सा समासोक्तिः, इति पण्डितराजः।

मम्मटस्य समासोक्तिलक्षणे स्थितौ परभेदकशब्दौ, अप्रकृतविशेषणपरौ। समासेन संक्षेपेणोक्तिः समासोक्तिरित्यन्वर्थेयं संज्ञा। ततश्च श्लिष्टविशेषणवाचकमात्रशब्दमहिम्ना प्रकृतार्थकेन वाक्येनाप्रकृतार्थवचनं समासोक्तिरिति तदर्थः। वामनाचार्येण परोक्तिपदस्य व्याख्या अप्रस्तुतवृत्तान्तस्यारोप इति कृता।[1] नागेश्वरीटीकायामपि तथा।[2] श्लिष्टविशेषणवशादप्रकृतव्यवहारस्य व्यञ्जनमेव, नत्वभिधानम्। अभिधायाः प्रकरणेन नियन्त्रितत्वात्। अत्र विशेषणस्य श्लिष्टत्वं प्रकृता-प्रकृतसाधारणत्वस्य औपम्यगर्भत्वस्य सारूप्यस्य चोपलक्षणम्। ततः श्लिष्टादिविशेषणमात्रमहिमोपस्थापितस्याप्रस्तुतव्यवहारस्य प्रकृतव्यवहार आरोपः समासोक्तिः। रूपके विशेष्ये प्रकृतेऽप्रकृतस्यारोपः। अत एकेदशविवर्तिरूपके नातिव्याप्तिः। श्लेषे विशेष्यस्यापि श्लिष्टत्वमत्र विशेषणमात्रस्य। पण्डितराजकृतसमासोक्तिलक्षणस्याप्ययमेवार्थः। किन्तु मम्मटमते अप्रस्तुतव्यवहाराभिन्नप्रस्तुतव्यवहारविशिष्टस्य प्रकृतस्य प्रतीतिः। पण्डितराजमते चाऽप्रस्तुतव्यवहारविशिष्टाप्रकृताभिन्नस्वव्यवहारविशिष्टप्रकृतस्य प्रतीतिः। अर्थादेकत्र व्यवहारे

---

१. परस्याप्रकृतार्थस्य अप्रकृतगत व्यवहाररूपार्थस्य उक्तिः, बोधनं प्रकृतवृत्तान्ते, आरोपः। —का० प्र० वा० टी०, ६११ पृ०

२. अत्र प्रकृतव्यवहारेऽप्रकृत-व्यवहारारोपः। —का० प्र० ना० समासोक्तिप्रकणम्।

व्यवहारारोपः, अपरत्र च व्यवहारिणि व्यवहारिणोऽभेदारोपः। मम्मटनये प्रकृत-व्यवहारेऽप्रकृतव्यवहारारोपः, पण्डितराजनयेऽप्रकृत व्यवहारिणोऽभेदस्य प्रकृत व्यवहारिण्यारोप इति यावत्। एतन्मतविषयो विचारः समासतो लिख्यते—

'विबोधयन् करस्पर्शैः पद्मिनीं मुद्रिताननाम्।
परिपूर्णानुरागेण प्रातर्जयति भास्करः॥'

इत्यत्र गाढप्रेमोपलक्षित-हस्तस्पर्शकरणक-मुद्रितवदन-नायिकाविशेष कर्मकबोधानुकूलव्यापारवन्नायकाभिन्नः किरणस्पर्श-करणक-मुकुलितकमलिनी-कर्मक-विकासानुकूलव्यापारवान् परिपूर्णरागोपलक्षितो भास्करो जयतीति बोधः। अप्रस्तुतवृत्तान्तेनाप्रस्तुतस्य व्यवहारिण आक्षेपः। ततः प्रस्तुते भास्करेऽत्र तदभेदारोपः श्लेषाभावस्थले "निशामुखं चुम्बति चन्द्र एषः' इत्यत्र निशा-चन्द्रनिष्ठाभ्यां स्त्रीत्वपुंस्त्वाभ्यां नायिकाया नायकस्य च व्यक्त्या बोधः। तस्मादत्रापि नायिकामुखचुम्बनानुकूलव्यापारवन्नायकाभिन्नो निशारम्भ-संयोगानुकूलव्यापारवान् चन्द्र इति बोधः। इत्थं सर्वत्र समासोक्तावप्रकृताभेदमुपादाय नानाशंकासमाधानैः प्राचामप्रकृतव्यवहारस्य प्रकृतव्यवहार आरोप इति सिद्धान्तः खण्डितो रसगङ्गाधरे। एतद् ग्रन्थे स्पष्टमेव। विस्तरभिया नोल्लिख्यते। नागेशेन प्राचामेव सिद्धान्तः समर्थितः, खण्डितश्च रसगङ्गाधरस्य सः। तस्य मर्मप्रकाशोक्तो विचारोऽधः प्रदर्श्यते।[१] प्राचां मम्मटादीनां नये 'विबोधयन्' इत्यादौ नायक-सम्बन्धिमुद्रितान-

१. समासोक्तावप्रस्तुतवृत्तान्तसमारोप एव चारुताहेतुरिति प्राञ्चः। तेषामयमाशयः— अयमैन्द्रीत्यादौ श्लिष्टविशेषण-प्रतीत प्रस्तुताप्रस्तुतवृत्तान्तयोः श्लेषमित्तिकाभेदाध्यवसायेनाभिन्नयोः प्रस्तुतचन्द्रादिवृत्तिता। तत्र तयोर्वृत्तान्तयोः परस्परं विशेष्यविशेषणभावे कामचारेऽपि प्रस्तुत-वृत्तान्तो विशेष्यः। तद्बोधकबोध्याप्रस्तुतस्तु अभेदेन तद्विशेषणम्। एवं चाऽप्रस्तुताभिन्न-प्रस्तुतस्य चन्द्रेणान्वयः। तत्र यद्यपि प्रस्तुतस्य स्वासाधारण धर्मेण चन्द्रेऽन्वययोग्यतास्ति तथाप्यप्रस्तुताभेदमापन्नस्य न सास्तीति तद्रूपावच्छिन्नस्य तस्य प्रकृतधर्मिण्यारोपः। न चाप्रस्तुतव्यवहार-समारोपपदेन प्रस्तुत-व्यवहार-समारोपपदेन च प्रस्तुतव्यवहारतादात्म्यापन्नसमारोपपदेन च तादात्म्यापन्नत्वेपि विशेष्यतायाः प्रस्तुते एव सत्वेनारोपं विनाप्यन्वययोग्यतेति वाच्यम्। दृगब्जेन वीक्षते इत्यादौ विशेष्यस्य स्वरूपेणेतरान्वयायोग्यस्येतरतादाम्यापत्त्या यद्योग्यत्वात् स्वतोऽन्वययोग्यस्यापीतरतादात्म्यापत्या तदयोग्यत्वस्यापि सत्वात्। न च रूपकवत् समासोक्तावपि प्रस्तुतेऽप्रस्तुत-समारोप एव चारुताहेतुरस्तु। तद्वाचकपदसमभिव्याहाराभावेन तस्यासम्भवात्। न चाक्षिप्तनायकादिना आक्षिप्तरूपकं भवति। 'निरीक्ष्य विद्युन्नयनैः पयोदः' इत्यत्र पयोदे द्रष्टृ-पुरुष-रूपकाक्षेपनिरीक्षणवदाक्षेपकाभावात्। न च विशेषणसाम्यप्रतीताप्रकृतवृत्तान्त एवाऽऽक्षेपकोऽस्तु। एतेनाक्षेपासम्भवेऽपि परनायिकामुखचुम्बनस्य

ननायिकाविशेषकर्मकहस्तस्पर्शकरणक प्रबोधनाभिन्न-मुकुलित कमलिनीकर्मक-किरणस्पर्शकरणकविकासानुकूलव्यापाराश्रयोभास्करो जयति इतिबोधः।

---

श्लेषमर्यादयाप्रतीतस्य प्रकृतधर्मिणि चन्द्रे आरोप्यमाणस्य जारासाधारणधर्मत्वेन प्रकृतधर्मिणि जारत्वव्यञ्जकता सुवचा। न च चन्द्रे जारत्वारोपमन्तरेणापि जारव्यवहारारोपसिद्धियनुपपत्यभावान्न जारत्वं गमयेदिति वाच्यम्। व्यञ्जनाया अनुपपत्तिं विनापि प्रसरात्। 'गतोऽस्तमर्कः' इत्यादौ तथैव दर्शनात्। अन्यथा अर्थापत्त्या गतार्थत्वेन व्यञ्जनावैयर्थ्यंप्रसंगादित्यपास्तम्। किं चैवं सति वाच्यार्थ-बोधोत्तरं तद्व्यङ्ग्यप्रतीतिः। सापि न केवलव्यवहारभानात्। अपितु तादृशनायक-नायिकासम्बन्धविशिष्ट-व्यवहारभानात्। एवं च वाच्यार्थबोधकालिक चमत्कारबीजमात्रमत्र निरूप्यत इत्यदोषः। अपि चातादृशव्यङ्ग्यस्याधिक चमत्कारकारित्वेन ध्वनिव्यवहारयोग्यता नालंकार शरीरघटकता। एवं च समासोक्तेस्तादृशध्वन्युपस्कारकतयाऽधिक चमत्कारकारित्व मलंकारत्वं च।न चैवं समासोक्तौ रूपकध्वनिनैव निर्वाहे पृथगलंकारत्वं न स्यादिति वाच्यम्। वाच्यार्थबोधकालिक चमत्कारस्यापह्नोतुमशक्यत्वेनालंकारत्वस्य दुरपह्नवात्। विपरीतं नायकत्वारोपव्यञ्जनस्य समासोक्त्यभ्यतर्भावं वदतो ध्वनित्वस्य दुर्वारत्वाच्च। तद्व्यङ्ग्यस्याधिक-चमत्कार-कारित्वेन प्रधानत्वात्। न च श्लिष्टशब्दोपस्थापितयो वृत्तान्तयोः परस्परमभेदेनान्वये मानाभावः, सहृदयहृदयस्यैव प्रमाणत्वात्। अतएव 'आगत्य सम्प्रति वियोग विसंष्ठुलाङ्गीम्' इत्यत्रार्थशक्तिमूलो नायक-नायिका-वृत्तान्तो वाच्यरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थित इति प्रदीपकृतः। प्राचीनाऽनुभवमपलप्यापि यद्येकत्र द्वयमितिरीत्या प्रस्तुताऽप्रस्तुत-वृत्तान्तयोर्विशेष्येणैव साक्षादन्वयः स्वीक्रियते तथाप्यप्रस्तुतवृत्तान्तान्वयानुरोधान्न प्रस्तुतोऽप्रस्तुतरूपसमारोपः। प्रस्तुतेऽप्रस्तुतवृत्तान्तारोपेणै[illegible]सिद्धेः। अप्रस्तुतरूपसमारोपेऽपि प्रस्तुतवृत्तान्तान्वयायोग्यतायास्तदवस्थात्वाच्च। नन्वेवं सति विशेषण-साम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिति प्राचीनलक्षणासंगतिः। अप्रस्तुतधर्मिकयत्नस्य त्वयानपेक्षणादिति चेत् न स्वरूपतोऽप्रस्तुतवृत्तान्तरोपस्याचमत्कारित्वं किन्त्वप्रस्तुतकामुकादि-सम्बन्धित्वेन गम्यमानस्यैव तस्यारोपः। अतः श्लेषादिमहिम्ना विशेषणपदैः स्वरूपतः समर्पितेन चुम्बनादिना ऐन्द्रो चन्द्र इत्येतद्गतस्त्रीलिंग-पुल्लिंग-सहकृतेन तत्सम्बन्धिनि कामुकादावभिव्यक्तेःपुनस्तदीयत्वानुसंधानात्। विशेषणसाम्येन वाच्योपस्कार कस्याप्रस्तुत-व्यञ्जनस्यापेक्षणात्। अप्रस्तुतस्येत्यस्याप्रस्तुत व्यवहारस्येत्यर्थो वा। एतेन वदनचुम्बनस्य पुत्रादिसाधारण्यात् कथं कामुका-भिव्यञ्जकत्वम्। किञ्च 'अहर्मुखं चुम्बति भानुबिम्बम्' इत्यत्रापि नायिका द्यभिव्यक्त्यापत्तिरित्यपास्तम्। यत्तु चन्द्रैन्द्रीपदगतलिङ्गाभ्यामभिव्यक्तनायकयोः स्वव्यञ्जकपदोपस्थापिताभ्यामभेदेनैवान्यवय उचितः। समान पदोपात्तत्व प्रत्यासत्तेरिति, तन्न। एवं हि वदता व्यवहारावच्छेदकत्वं तयोःस्वीक्रियते, न वा। आद्ये एकस्यार्थस्योभयत्रान्वयोऽव्युत्पत्तिग्रस्तः। अन्त्ये रसाननुगुणत्वम्। यदप्यैन्द्र्यादौ नायिकात्वाभाने केवलं व्यवहारावच्छेदकत्वमात्रस्वीकारे बाधः। नायिकात्वानालीढकेवलैन्द्रीमुख चुम्बन रूपस्य व्यवहारस्य नायकासम्बन्धित्वात्। नही दिक्तादात्म्यं बिना नायिकायाः पृथङ्मुखं विशेषयितुं सामर्थ्यमस्तीति, तदपि न।

प्रस्तुतविशेष्ये श्लेषादिमूलकाभेदा-ध्यवसानेनाप्रस्तुतव्यवहारतादात्म्याऽऽपन्नप्र-स्तुत व्यवहारस्यारोप एवाप्रस्तुत-व्यवहारारोपपदार्थ इति मर्मप्रकाशे स्पष्टम् । एव-मन्यत्र अपि प्राचां नये बोधः ।

---

मुखशब्दश्लेप-सामर्थ्येन ऐन्द्रीमुखमित्यस्य समस्तत्वेऽपि ऐन्द्र्यंशे मोषेण केवलमुख-चुम्बनस्योपस्थितेः। तदेतदुक्तं कुवलयान्दे श्लेषादिमहिम्ना स्वरूपतः सामर्पितेन वदन चुम्वनादिनेति । नह्यैन्द्रीपदशब्दार्थेन दिग्रूपेण वदनरूपमुखपदार्थस्यान्वयो वक्तुं शक्यः सहृदयैः। नन्वेतादृशकुसृष्टिकल्पनापेक्षया विशेषणसाम्यमहिम्ना प्रतीतो वाक्यार्थः स्त्रीलिंग पुलिंगाभ्यामभिव्यक्तनायिकाद्यभिन्नचन्द्रादिघटितप्रकृतवाक्यार्थे स्वावयव-तादात्म्यापन्न-तदवयवोऽवतिष्ठते इत्येव कल्पयितुं युक्तम् एवं च नायिकाऽभिन्नेद्र-दिक्-सम्बन्धिवदनाभिन्न-प्रारम्भकर्मकचुम्बनरूपसम्बन्धाश्रयो नायकाऽभिन्नश्चन्द्र इति बोध इति चेत् न। एवं हि ऐन्द्र्यां नायिकाऽभेदप्रतीतौ मुखचुम्बनादौ वदन चुम्बनाद्यभेदप्रतीतावपि वदनचुम्बने साक्षान्नयिकार्थसम्बन्धा ऽप्रतीत्या रसोद्बोधाना-पत्तेः। न च व्यञ्जनया तत्प्रतीतिरस्त्येव, यस्मिन् यदभेदः तत्सम्बन्धिनि तत्सम्बन्ध्यभेद इति न्यायेन वा मानसिकी तत्प्रतीतिः, तत एव चमत्कार इति वाच्यम्। तदपेक्षया साक्षाच्चमत्कारोपपादकवाच्यार्थबोधव्युत्पादनस्यैवौचित्यात्। ननु व्यञ्जनया अप्रकृ-तार्थ-बोधः। शक्तेः प्रकरणादिना नियन्त्रणात्। ततो व्यञ्जनमाहात्म्यादेव प्रकृतवाक्या-र्थतादात्म्येनावातिष्ठते इति चेत्तर्हि वैयञ्जनिकोऽप्रकृतार्थबोधो नायिकाद्य विशेषितो विशेषितो वा। तत्र नाद्यः। रसाननुगुणत्वात्। अन्त्ये स्वपदोपस्थापिताभ्यां लिङ्गाभ्यां नायिकाद्यभेदबोधो व्यर्थोऽसम्भवी च। नायिकाविशेषणकव्यवहारबोधनेन कृतार्थ-त्वात्। अपि च तथा सति जारकर्तृकसानुरागपर-नायिकामुखचुम्बनाभिन्न-प्राची-प्रार-म्भसंयोगाश्रयो जाराभिन्नश्चन्द्र इति बोधकदर्थनमेव स्यात्। तस्माद् व्यञ्जनया शक्त्या वा उपस्थिताप्रस्तुतवृत्तान्तेन व्यञ्जनयोपस्थितेन कामुकादिसम्बन्धित्वेन गृहीतेनाभेदमा-पन्नस्य प्रस्तुत-वृत्तान्तस्यारोपः। प्रकृतविशेष्ये नव्यमते श्लेषस्थलेऽप्रकृतोपस्थितेः शक्त्यैव व्यवस्थापयिष्यमाणत्वेन तन्मते शक्त्यैवाप्रकृतार्थोपस्थितिः। प्राचां तु व्यञ्जन-यैवेत्येतावान् विशेषः। एवं च वाच्यार्थ-बोधोत्तरं यदि चन्द्रादौ नायकत्वादिप्रतीतिरपि सहृदयानुभवसाक्षिकी तदास्तु इत्युपपादितमेवेदं प्राक्। एतेन—निर्लक्ष्मीकाऽभवत् प्राची प्रतीचीं याति भास्करे। प्रिये विपक्षरणीरक्ते का मुदमञ्चति" इत्यत्र पूर्वार्धगतायां समासोक्तौ नायकत्वाप्रतीतावुत्तरार्द्धे प्रियत्वादिना समर्थनायाः सर्वथैवानुपपत्तिरित्यपा-स्तम्। प्रस्तुतप्राचीवृत्तान्ते आरोप्यमाणाप्रस्तुत-खण्डितनायिका विशेषवृत्तान्तसमर्थनाय तस्यावश्यकत्वाच्च। एवं च सानुरागपरनायिका-मुखचुम्बनाभिन्न-प्राचीप्रारम्भसंयोगा-श्रयश्चन्द्र इत्येव बोधः। एतेन अयमैन्द्रीत्यादौ शक्तिव्यञ्जनाभ्यां प्राचीप्रारम्भसंयोगा-श्रयश्चन्द्रो जारसम्बन्धिसानुरागपरनायिकामुख-चुम्बनाश्रय इति बोधः। अप्रस्तुतवृत्तान्ताभिन्नत्वेनाध्यवसितस्य-प्रस्तुत-वृत्तान्तस्य तादात्म्येनाप्रस्तुतारोपवि-षयेऽप्रस्तुतधर्मियन्वय इति मते तु सानुरागपरनायिकामुखचुम्बनाभिन्न-प्राची-प्रारम्भसं-योगजाराभिन्नश्चन्द्र इति बोध इत्यपास्तम्। समासोक्ते गुणी भूतव्यङ्ग्येति व्यवहारस्तु प्रकृत व्यवहारेऽप्रकृतव्यवहाराभेदस्य व्यञ्जनया प्रतीतेर्निर्बाध इति दिक्।

—गु० म० प्र० ४९५-९६, पृ०

**परिकरः—**

विशेषण-व्यङ्ग्यार्थेन परिकरणं वाक्यार्थस्योपस्करणं परिकरः। परिकरोति प्रकृतार्थमुपकरोतीति परिकरः साभिप्रायशब्दः सोऽस्मिन्नस्तीति परिकर इति वा परिकरपदव्युत्पत्तिः। मत्वर्थीयोऽच्तद्धितः। भूषणार्थ-त्वाभावान्न सुडागमः। अस्यालंकारस्य लक्षणं 'विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः' इति प्रोक्तं काव्य-प्रकाशे। लक्षणस्थ-विशेषणपदगतं बहुचनं विवक्षितम्। साकूतशब्दः साभिप्राय-परः। साभिप्रायत्वं च चमत्कारि-प्रकृतार्थोपस्कारकव्यङ्ग्य-व्यञ्जकत्वम्। उक्ति विंशेष्यस्य शब्दतः कथनम्। ततः प्रकृतार्थोपस्कारक-चमत्कारिव्यङ्ग्यार्थप्रतिपादकै र्विशेषणै र्विशेष्यस्योक्तिः परिकरालंकार इति लक्षणार्थः।[१]तादृशविशेषणानां बहुत्व एवायमलंकारः। एकत्वे तु अपुष्टार्थत्वदोषाभावमात्रम् न तु चमत्कारः। अतएव विशेषणैरित्युक्तम्। उदाहृतं च प्रकाशकृता—

"महौजसो मानधना धनार्चिता
धनुर्भृतः संयति लब्धकीर्तयः।
न संहतास्तस्य न भेदवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितम्॥"

इति पद्यम्। अत्र महौजस्त्वादीनि नाना विशेषणान्युपात्तानि, तेन दुर्योधनपक्ष-पातिनां महीपतीनां परानभिभवनीयत्वादीनि प्रकाश्यन्ते। एकनिष्ठत्वेन बहूनां विशेषणानां निबन्धने वैचित्र्यमनुभवसिद्धमिति न केवलाऽपुष्टार्थत्वाभावः।

इत्थं मम्मटमते. परिकरे नानासाभिप्रायविशेषणानामुक्तिरनिवार्या। अन्यथाऽपुष्टार्थत्वदोषाभाव-मात्ररूपत्वेन परिकरस्यालंकारत्वं न स्यात्।

पण्डितराजा एकस्यापि विशेषणस्य साभिप्रायत्वे परिकरालंकारं स्वीकुर्वन्ति। उदाहरन्ति च—

"मन्त्रैर्मीलितमौषधैर्मुकुलितं त्रस्तं सुराणां गणैः
स्रस्तं सान्द्रसुधारसैर्विदलितं गारुत्मतग्रावभिः।

---

[१] तथा चोक्तं सारबोधिन्याम्, साभिप्रायानेक-विशेषण-द्वारा यत्र विशेष्यस्यातिशयप्रतीतिः स परिकर इत्यर्थः' इति।'—का० प्र० बा० टी० ६९९ पृ०।

वीचिक्षालितकालियाहितपदे स्वर्लोककल्लोलिनि
त्वं पापं तिरयाधुना भवभयव्यालावलीढात्मनः ॥"

इति पद्यम् । अत्रैकमेव भगवत्या भागीरथ्या वीचिक्षालितकालियाहित-पदत्वं विशेषणं भवव्यालजनित-सन्तापनाशिकात्वातिशयमभिव्यनक्ति । तथाहि भगवत्या भवतापनाशिकात्वं प्रसिद्धम् । "स्थास्नुजङ्गमसंभूतविषहन्त्र्यै नमो नमः 'इति-पुराणतः शुद्ध-व्यालजनित-सन्तापहारिणीत्वमपि तथा । एवं वाच्यार्थः स्वतो निष्पन्नः । तत्र वीचिक्षालितेत्यादिविशेषणं तस्मिन्, चमत्कारातिशयमादधाति । कालियाहितपदेनैतद् विवक्षितं यद् भगवतः श्रीकृष्णस्य पदे कालियनागविषहरण-सामर्थ्यं विद्यते । तत्पदमनया क्षालितम् । ततो भगवत्पदस्थरेणुनिः-सरणद्वारा तत्सामर्थ्यं भगवत्यामपि आगतम् । इदं व्यङ्ग्यं भागीरथीकर्तृकतापशमन रूपवाच्योपस्कारकत्वेन गुणीभूतम् ।

इत्थमेकविशेषणस्थलेऽपि अयमलंकारः । बहूनां विशेषणानां साभिप्रायत्वे चमत्कारातिरेक इति त्वन्यत् । न चैकविशेषणस्थलेऽपुष्टार्थत्वाभाव इति वाच्यम्, एकविशेषणस्थलेऽपि दोषाभावात् चमत्कारातिशयस्य दर्शनात् । मृच्छौचसन्ध्याद्यकरणस्य दोषत्वेऽपि सन्ध्याकरणं न दोषाभावमात्रमपितु फलायापि नागेशेनापि प्रोक्तम्, समर्थितं चैकविशेषणस्थलेऽपि परिकरालंकारत्वम् ।[१]ब्राह्मणस्य मूर्खत्वं दोषः, विद्या न मूर्खत्वाभावमात्रमपितु फलायापि, इति प्रसिद्धम् । सुन्दरत्वे सत्युपकारकत्वमलंकारत्वम्, चमत्कारापकर्षकाभावत्वं च दोषाभावत्वम् । एतद्धर्मद्वयं विविक्तविषयम् । यदि दैवात् क्वचिदुभयोरनयोः धर्मयोरेकत्र स्थितिस्तत्रायोर्नं संकर इति प्रसिद्धम् । यथाऽवसरविशेषे विद्याया दोषाभावत्वमपि, गुणत्वमपि च यदि प्रसज्येते तथा दोषभाव-गुणत्वयोर्नसंकरः । एवं प्रकृतेऽपि दोषाभावत्वमलंकारत्वं च पृगिति, अनयोः संकरो वक्तुमशक्यः । अतोऽलंकारत्वमविरुद्धम् । अत्रत्यं पण्डितराजमतं सम्यगेवाभाति । एकविशेषणस्थलेऽपि परिकरालंकारत्वं

१. वस्तुतः संध्याद्यकरणस्य दोषत्वेऽपि तदभावो न दोषाभावमात्रम् । अपितु फलायापि । एवं यमकाद्यतिरिक्तेऽपि साभिप्रायैक-विशेषणोपादाने दोषत्वाभावश्चमत्कारश्चेत्यलंकारत्वम् । किं च यथा तत्र दोषाभावस्यांग-वैकल्येऽपि सिद्धे सा तत्करणं फलातिशयायैव, एवं दोषाभावस्य विशेषणानुपादानेअपि सम्भवेन साभिप्रायैक-विशेषण निबन्धनोऽपि चमत्कारो दुरपह्नव इति बोध्यम् । —गु० म० प्र० ५२०-२१ पृ०

प्रदीपेऽपि प्रतिपादितम् ।[१] एतेन "यद्यप्यपुष्टार्थस्य दोषताभिधानतन्निराकरणेन पुष्टार्थ-स्वीकारः कृतः, तथाप्यनेक निष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलंकारमध्ये कीर्तितः इति मम्मटोक्तिरपार्था । पण्डितराजस्य 'विशेषणानां साभिप्रायत्वं परिकरः' इति परिकरलक्षणे विशेषणानामित्यत्र बहुत्वमविवक्षितमिति ज्ञेयम् । अथवा मम्मटादिप्राचीनमतमनुसृत्यैव तथा लक्षण विधानेन बहुत्वं विवक्षितम् पश्चात्तु तस्य खण्डनमित्यन्यदिति भावः ।

**श्लेषः—**

अयं द्विधा शब्दश्लेषोऽर्थश्लेषश्च । बाच्यभेदेन भिन्नानामेकोच्चारणविषयाणां शब्दानां स्वभिन्नस्वरूपापह्नव आद्यः । एकार्थप्रतिपादकानां परिवृत्तिसहिष्णूनां शब्दानां प्रकरणाद्यनियमेन नानार्थबोधकता द्वितीयः । आद्ये शब्दपरिवृत्त्यसहिष्णुत्वं द्वितीये च तदभावः । आद्यो द्विधा सभङ्गोऽभङ्गश्च । पुनः प्रकारान्तरेण स वर्णपदलिंगभाषाप्रकृतिप्रत्ययविभक्ति-वचनानां भेदादष्टधा । अभङ्गस्त्वेकविध एव । स च प्रकृत्यादेर्भेदाभावस्थले । द्वितीय एकविध एव । तथा चोक्तं मम्मटभट्टैः

"वाच्यभेदेन भिन्ना यद्युगपद्भाषणस्पृशः ।

श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा ॥

भेदाभावात् प्रकृत्यादे र्भेदोऽपि नवमो भवेत् ।

श्लेषः स वाक्ये, एकस्मिन् यत्रानेकार्थता भवेत् ॥"

न च 'भद्रात्मनः' इत्यादौ शब्दशक्तिमूलध्वनावतिव्याप्तिः, परिवृत्त्यसहिष्णूनां भद्रादीनां नानार्थानां शब्दानां श्लेषणस्य सत्त्वात्, एवं चार्थशक्तिमूलध्वनावपि सा, परिवृत्तिसहिष्णूनां शब्दानां तत्रापि एकार्थशक्तानामनेकार्थबोधकत्वात्, इति वाच्यम्, एकस्यार्थस्य प्राकरणिकत्वेऽपरस्य चाऽप्राकरणिकत्व एव तथाविधध्वनेः स्वीकारात्, द्वयोरर्थयोः प्राकरणिकत्वेऽप्राकरणिकत्व एव वा श्लेषालंकारस्याङ्गीकाराच्च । एवं काव्य-प्रकाश कृदाशयः ।

---

१. वयं त्वालोचयामः तादृशैकविशेषणोपन्यासेऽपि अलंकारत्वमुचितम् । अपुष्टार्थत्वविरहस्य निर्विशेषणतयाप्युपपत्तेरनुभवसिद्धत्वाऽभावाद्वैचित्र्यस्य चानुभवसिद्धत्वात् । यथा—'शुद्धे सद्मनि पल्लविन्युपवने' इत्यादौ । —का० प्रदी० ३६९ पृ० ।

श्रुत्यानेकार्थप्रतिपादनं श्लेष इति पण्डितराजः। एकेनैव वर्णानुपूर्वीश्रवणेन नानार्थ-प्रतिपादनं स इति तदर्थः। नानार्थप्रतिपादनं च द्विधा-नानाधर्मपुरस्कारेणैक-धर्मपुरस्कारेण च। आद्यो द्विधा नानाशब्दप्रतिभानद्वारा एक शब्दप्रतिभान-द्वारा चेति त्रिधा श्लेषः। तत्र नानाशब्दप्रतिभान-द्वारा नाना-धर्मपुरस्कारेण नानार्थ-प्रतिपादनस्थले सभङ्गः। इमौ शब्दश्लेषभेदौ। तृतीय एकधर्मपुरस्कारेण नानार्थप्रतिपादनस्थलगतोऽर्थश्लेषः। इत्थं त्रिविधोऽपि श्लेषः पुनस्त्रिधा प्रकृतमात्राश्रितोऽप्रकृतमत्राश्रितः प्रकृताप्रकृतोभयाश्रितश्च। तत्र प्रथमेऽनन्तरोक्ते भेदे द्वितीये च तस्मिन् प्रकृताप्रकृतो-भयाश्रिते च विशेषणवाचकस्य एव श्लिष्टत्वं न तु विशेष्यस्यापि। शब्दशक्तिमूलध्वनौ नास्य तृतीयभेदस्यातिव्याप्तिः। तत्र तु विशेष्यस्यापि श्लिष्टत्वात्। एतस्मिन् तृतीयभेदे प्रकृताप्रकृतधर्मिणोः शब्दतः कथनमावश्यकम्। प्रकृतधर्मिमात्रस्य कथने तु समासोक्तिरेव।

इत्थं पण्डितराजेन प्रकृताप्रकृते। भयाश्रितोऽपि श्लेषप्रभेदः स्वीकृतः। प्राचां मते नात्र शब्दशक्तिमूलध्वनेर्विषयः। तत्र विशेष्यस्यापि श्लिष्टत्वात्, अत्र च विशेषणमात्रस्य श्लिष्टत्वात्। वस्तुततस्तु पण्डितराजमते न नानार्थस्थले शब्दशक्तिमूलो ध्वनि र्नचाप्रकृतार्थस्य व्यङ्ग्यत्वम्। अप्रकृतार्थस्य शक्त्याऽपि बोधनस्य सम्भवात्। अतो योगरूढिस्थल एव शब्दशक्तिमूलो ध्वनिः। तथा चोक्तम् 'वयं तु ब्रूमः अनेकार्थस्थले ह्यप्रकृताभिधाने शक्तेरुक्तिसम्भवोऽपि अस्ति। योगरूढिस्थले तु सापि दूरापास्ता।' प्राचाभिमतस्य शब्दशक्तिमूलध्वनेः समासोक्तावेवान्तर्भावः। इत्थं पण्डितराजमते समासोक्तिर्द्विधा श्लिष्टविशेष्या, अश्लिष्टविशेष्या च। 'रागावृतो वल्गु कराभिमृष्टं श्यामामुखं चुम्बति चारुचन्द्रः' इत्यत्र समासोक्तिः सर्वाभिमता। चन्द्रे नायिकामुखचुम्बनकर्तृनायकाभेदप्रतीतेः। यदि चन्द्रपदस्थाने राजेति क्रियते तदा विशेष्यस्यापि श्लिष्टत्वे समासोक्तिः समाप्ता, शब्दशक्तिमूलध्वनित्वमागतमिति कथनमाग्रहमूलम्। विशेष्यस्यापिश्लिष्टत्वेऽप्रकृतव्यवहारो न प्रतीयत इति कथनमनुभवविरुद्धम्। प्रकृतस्य प्राधान्येनाप्रकृतस्य तु तदुपकारकत्वेन गुणीभावः स्पष्टः। विशेष्यस्य श्लिष्टत्वे व्यङ्ग्यप्राधान्यं वक्तुमशक्यम्। यैरपि समासोक्तौ नायकत्वादेरप्रकृतस्य प्रत्ययोनाभ्युपेयते, अभ्युपेयते च नायकव्यवहारस्य सः, शब्दशक्तिमूलध्वनौ चाभ्युपेयतेऽप्रकृतप्रत्ययः तेषामपि मते समासोक्तौ व्यङ्ग्यस्याप्रधान्यं प्राधान्यं च ध्वनाविति कथने नास्ति कश्चिद्धेतुः। प्रकृताप्रकृतयोर्गम्यमानोपमाऽपि प्रकृतोपस्करणेन गुणीभूतैव। तस्माद् योगरूढिस्थल एव शब्दशक्तिमूलो ध्वनिः। इत्थं

पण्डितराजमते नानार्थ-स्थले द्वयोरर्थयोः प्रकृताप्रकृतत्त्वे च समासोक्तिरेवालंकारः। न तु शब्दशक्तिमूलो ध्वनिः। श्लेषविषये नानाशास्त्रार्थाः ग्रन्थयोरनयोः प्रसिद्धाः। अतस्तद्विषये नाधिकमुच्यते।

**अप्रस्तुतप्रशंसाः—**

प्रस्तुतव्यवहारव्यञ्जकाप्रस्तुतव्यवहारवर्णनमप्रस्तुतप्रशंसा। अप्रस्तुतस्य प्रशंसा वर्णनमप्रस्तुतप्रशंसेति अन्वर्था संज्ञास्यालंकारस्य। समासोक्तौ प्रस्तुतेनाप्रस्तुतस्य व्यञ्ज्जनाऽत्रतु वैपरीत्यम्। सा चाऽप्रस्तुत-प्रशंसा पंचधा अप्रस्तुतेन स्वसदृशं प्रस्तुतं यत्र गम्यते तत्राऽऽद्या। अप्रस्तुत-कारणेन प्रस्तुतकार्यावगतौ द्वितीया। अप्रस्तुतकार्येण प्रस्तुतकारणावगतौ तृतीया। अप्रस्तुत सामान्येन प्रस्तुतविशेषगमने चतुर्थी। अप्रस्तुतविशेषगम्यप्रस्तुतसाम्यस्थले पञ्चमी। आद्यभेदे त्रयः प्रकाराः। श्लेषेण समासोक्त्या सादृश्यमात्रेण चाऽप्रस्तुतवर्णनेन तुल्यस्य प्रस्तुतस्य पतिपत्तेः। इत्थं प्राचां मम्मटादीनामाशयः। अमुमेवाशयं मनसिकृत्य पण्डितराजेन—'अप्रस्तुतेन व्यवहारेण सादृश्यादिवक्ष्यमाण प्रकारान्यतम-प्रकारेण प्रस्तुत-व्यवहारो यत्र प्रशस्यते साप्रस्तुत-प्रशंसा।' इति अवादि। रसगङ्गाधरे प्राचामनुरोधेनैवास्यालंकारस्य पंच प्रकारा निरूपिताः। वस्तुतोऽस्य नानाभेदा भवितुमर्हन्ति। यथा तुल्येनाप्रस्तुतेन तुल्यस्य प्रस्तुतस्य प्रत्यायनरूप आद्यभेद उक्तः। तस्यान्योऽपि प्रकारो भवितुमर्हति यदा स्थलविशेषे वाच्यव्यङ्ग्ययोरुभयो र्वृत्तान्तयोः प्रस्तुतत्वम्। यथा—

"मलिनेऽपि रागपूर्णां विकसितवदनामनल्पजल्पेऽपि।
त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि।"

इत्यत्र जलक्रीडाप्रकरणे जलकमलिन्यादिषु पुरस्थितेषु स्वनायिकायां नायकेऽननुरक्ते च पार्श्वस्थाया नायिका-सख्या उक्तौ प्रस्तुतभ्रमरवृत्तान्तेन प्रस्तुतनायकवृत्तान्तावगतौ। न च भ्रमरवृत्तान्तस्य प्रस्तुतत्वेनाऽप्रस्तुतवर्णनेन प्रस्तुत-व्यञ्जनरूपा कथमत्राप्रस्तुतप्रशंसेति वाच्यम्। एतदलंकारलक्षणेऽप्रस्तुतपदेन मुख्यतात्पर्यविषयीभूतार्थातिरिक्तार्थस्यैव विवक्षणात्। अत्र पद्ये मुख्यतात्पर्यविषयो नायकवृत्तान्तस्तदतिरिक्तश्च भ्रमरवृत्तान्तः। अतस्तस्याप्रस्तुतत्वमक्षतम्। अतो न कश्चिद् विरोधः। स मुख्यतात्पर्यविषयातिरिक्तविषयोऽर्थः क्वचिदत्यन्ताप्रस्तुतः क्वचिच्च प्रस्तुत इति त्वन्यत्। एतेन प्रस्तुतस्य प्रस्तुतेन व्यङ्ग्यत्वे प्रस्तुताङ्कुरनामातिरिक्तोऽलंकार इत्यपास्तम्। किञ्चिद्भेदमात्रेण वाग्भंगीनामान-

न्त्येनानन्तालंकारभेदापत्तेः। वस्तुतः प्रस्तुतेन प्रस्तुतस्य व्यङ्ग्यत्वे ध्वनित्वमेव न्याय्यम्। अत्यन्ताप्रस्तुतेन प्रस्तुतस्य तत्त्वे तु तस्य वाच्यतायामपर्यवसन्नत्वेनाभिधया प्रतीयमानस्य बलादाक्षेपेण गुणीभूतव्यङ्ग्यत्वमेव। इत्थं तुल्येन तुल्यस्य प्रतिपादने द्विधा दर्शनं व्यवस्थितम्। अन्ये कार्य-कारण-भाव-सामान्यविशेष-भावमूलाश्चत्वारो भेदा गुणीभूतव्यङ्ग्यभेदाः। ध्वनिकृताऽपि सादृश्य-मूलाऽप्रस्तुत-प्रशंसायां ध्वनित्वं प्रतिपाद्य महाविषयस्य ध्वनेरस्यामन्तर्भावो निरस्तः।

'आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसालमुकुलानि समाश्रयन्ते।
संकोचमञ्चति सरस्त्वयि दीन-दीने
मीनो नु हन्त कतमां गतिमभ्युपैतु॥'

इत्यत्रापि सरोराजवृत्तान्तयोरुभयोः प्रस्तुतत्वे ध्वनित्मेव प्रागुक्तदिशा। सरोवृत्तान्तस्य प्रस्तुतत्वे राजवृत्तान्तस्य गम्यस्य चाप्रस्तुतत्वे अपि अप्रस्तुतप्रशंसैव। न चाऽप्रस्तुतेन प्रस्तुतस्य गम्यत्वेऽप्रस्तुत-प्रशंसेति सिद्धान्तेन कथमत्र सा, प्रस्तुतस्य सरोवृत्तान्तस्य वाच्यत्वादिति वाच्यम्। अप्रस्तुतेन वाच्येन गम्येन वा वाच्यस्य गम्यस्य वा प्रस्तुतस्य प्रशंसाऽप्रस्तुतप्रशंसेति तदर्थात्। अतो व्यङ्ग्येन राजवृत्तान्तेन वाच्यस्य प्रस्तुतस्य प्रशंसने बाधाभावोऽक्षतः। वस्तुतस्तुल्येन तुल्य-गमने ध्वनित्वमेव पण्डितराजस्याभिमतम्। सादृश्यमूलायाः तस्या ध्वनित्वेनालंकार्यत्वादलंकारत्वाभावाच्च। तस्माच्चात्वार एव कार्यकारण-भावादिमूला भेदा अप्रस्तुतप्रशंसायाः।

मम्मटेन तुल्येन तुल्याभिधानरूपाया अप्रस्तुत प्रशंसायाः त्रयो भेदाः स्वीकृताः श्लेषहेतुकः, समासोक्तिहेतुकः सादृश्यमात्रहेतुकश्च। समासोक्तिहेतुके भेदे येनास्यभ्युदितेन चन्द्रगमितः क्लान्तिं रवौ तत्र ते, युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः इत्यादि पद्यमुदाहृतम्। समालोचितमिदं पण्डितराजेन। तथाहि-अत्र कथं समासोक्तिः? विशेषणसाम्यमहिमप्रतीतकापुरुषवृत्तान्तस्य प्रस्तुत्वे समासोक्तेरत्रविषयाभावात्। श्लिष्टविशेषणमहिमप्रतीताप्रस्तुतस्थल एव तस्येष्टेः। तस्य कापुरुष-वृत्तान्तस्याप्रस्तुतत्वेऽप्रस्तुतशंसाया एवाभावः। "अप्रस्तुतप्रशंसा सा या सैवाप्रस्तुताश्रया।' इति लक्षणेनाऽप्रस्तुतेन प्रस्तुतस्य गम्यत्वेऽप्रस्तुतप्रशंसायाः स्वीकारात्। प्रस्तुत आश्रयः प्रधानमिति हि प्रस्तुताश्रायपदार्थः। यदि समासोक्ति-

पदेनात्र श्लिष्टविशेषणाक्षिप्तद्वितीयार्थमात्रस्य विवक्षा तर्हि न कश्चिद् दोषः। वस्तुतस्त्वत्र न समासोक्तिरपितु समासोक्ते श्छाया। 'अत्र विपक्षेण पराभूते तमुपजीव्य धन्यम्मन्ये क्वचन पुंसि' अप्रकृतचन्द्रव्यवहारः प्रतीयते। तेनाप्रकृतात् प्रकृताक्षेपे समासोक्तिच्छाया, न तु सा, तत्र प्रकृतेऽप्रकृतव्यवहारारोपात् इति चक्रवर्तिभट्टाचार्या आहुः।

**पर्यायोक्तम्:—**

'पर्यायोक्तं विना वाच्यवाचकत्वेन यद् वचः' इति मम्मटः। 'विवक्षितस्यार्थस्य भङ्ग्यन्तरेण प्रतिपादनं पर्यायोक्तम्' इति पण्डितराजः। व्यञ्जनाद्वारा योऽर्थो येन रूपेण बोधयितुमिष्टस्तद्रूपातिरिक्तेन चारुतरेण प्रकारेण तस्याऽभिधया प्रतिप्रादनं पर्यायोक्तमिति सरलाकारकृता पण्डितराजपर्यायोक्तलक्षणव्याख्या। केनचिद्रूपेण व्यञ्जनया लभ्यस्यार्थस्य ततोऽपि चारुतररूपेण यदभिधया प्रतिपादानं तत्पर्यायोक्तमिति नागेशः। वाच्यवाचकभिन्नेनावगमनव्यापारेणार्थाद्वाच्यस्यैव यदभिधानं तत्पर्यायोक्तमिति गोविन्दठक्कुरः। यत्र वाच्यार्थ एव प्रकारान्तरेण व्यञ्जनया प्रतिपाद्यते तत् पर्यायोक्तमिति काव्यप्रकाशबालबोधिनीटीकाकारो झलकीकरवामनः। पर्यायशब्दोऽत्र प्रकारवचनः। "पर्यायस्तु प्रकारे स्यान्निर्माणेऽवसरे क्रमे" इति विश्वकोशात्। यत्र वाच्यार्थ-व्यङ्ग्यार्थयोः पर्यवसान ऐक्यम्, केवलमुक्ति-प्रतीत्योः प्रकारभेदः तत्र पर्यायोक्तमिति फलितोऽर्थः। इत्थमाशयो मम्मटस्य। पण्डितराजस्याशयः प्रागुक्त एव। एकस्यैवस्तुनो वाच्यत्वव्यङ्ग्यत्वे मम्मटनयेऽविरुद्धे। यथा एकस्यैव गोत्वस्य गोव्यक्तेस्तच्चलनस्य तन्निष्ठशुक्लादेर्गुणस्य चाभेदेनासंसृष्टत्वेन च निर्विकल्पकज्ञानविषयत्वं भेदेन संसृष्टत्वेन च सविकल्पकज्ञानविषयत्वं तथात्रापि एकस्यैव वस्तुनः प्रकारभेदेन वाच्यत्वं व्यङ्ग्यत्वं च।

"यं प्रेक्ष्य चिररूढापि निवासप्रीतिरुज्झिता।
मदेनैरावणमुखे मानेन हृदये हरेः॥"

इत्युदाहरणे मम्मटभट्टेनोक्तम्—

"अत्र, ऐरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यमपि शब्देनोच्यते तेन यदेवोच्यत तदेव व्यङ्ग्यम्। यथा तु व्यङ्ग्यं न तथोच्यते।" वस्तुतस्त्वत्र मदमानमोचनस्यैव व्यङ्ग्यत्वं नत्वैरावणशक्रयोरपि। तयोश्शब्दतः कथनात्। मम्मटस्य

तयोरपि व्यङ्ग्यत्वोक्तिस्तु वैयञ्जनिकबोधविषयस्य समस्तवाक्यार्थस्य व्यङ्ग्यत्वमादाय। विवेके कृते मदमानमोचनयोर्धर्मयो र्व्यङ्ग्यत्वं वाच्यत्वं च ऐरावणशक्रयोः। एवं पर्यायोक्ते केचिद्वाच्याः केचिच्च व्यङ्ग्याः पदार्था भवन्तीति निष्कर्षः।

**व्याजस्तुतिः—**

व्याजरूपा व्याजेन वा स्तुति र्व्याजस्तुति पदार्थः। यत्रापाततः प्रतीतयोः स्तुतिनिन्दयो र्निन्दास्तुत्योः पर्यवसानं तत्रायमलंकारः। अस्मिन्नलंकारे वाच्ययोः स्वरूपे स्तुतिनिन्दारूपेऽप्रतिष्ठानाद् व्यङ्ग्ययोर्निन्दास्तुत्योराक्षेपः। व्यङ्ग्ययोर्वाच्यसिद्धिकृत्त्वेन नात्र ध्वनित्वम्। अर्थात् यत्र वाच्ययोस्तयोर्बाधस्तत्रैव अयमलंकारः। अन्यत्र तु ध्वनित्वमिति प्राचां सिद्धान्तः। एतदलंकारविषये द्वयोः काव्य प्रकाशरसगङ्गाधरकृतोर्मतैक्यम्। अतएव

"व्याजस्तुतिर्मुखेनिन्दा स्तुतिर्वारूढिरन्यथा" इति मम्मटोक्तिमनुकुर्वता - पण्डितराजेनोक्तम्—

"आमुख प्रतीताभ्यां निन्दास्तुतिभ्यां स्तुतिनिन्दयोः क्रमेण पर्यवसानं व्याजस्तुतिः" इति।

**आक्षेप :—**

विशेषव्यङ्ग्यार्थ-बुबोधयिषया विवक्षितस्य प्राकरणिकस्यार्थस्य निषेधाभास आक्षेप इति मम्मटः। स च द्विधा-वक्ष्यमाणविषय उक्तविषयश्च। तथा चोक्तम्—

> "निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया।
>
> वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ॥"

निषेधो निषेध इव यः सः इत्यादि। इत्थं मम्मटमते व्यङ्ग्यविशेषप्रतिपिपादयिषाप्रयुक्त-विवक्षितार्थ-निषेधाभास आक्षेप इति सिद्ध्यति। रसगङ्गाधरे नाना लंकारिक-प्रोक्ताक्षेपलक्षण संग्रहार्थं 'इतरे तु-निषेधमात्रमाक्षेपः' 'इति निगदितम्। तेनोपमेय-कृतोपमानकैमर्थ्यपक्षान्तरालम्बनप्रयुक्त-प्राचीनपक्षकैमर्थ्यं विशेषप्रतिपादनप्रयोजकोक्तवक्ष्यमाण कथन कैमर्थ्यानां निषेधविध्याभासयोश्च संग्रह उक्तः। व्यङ्ग्यविशेषसद्भावप्रयुक्तचमत्कारवत एव निषेधमात्रस्यालंकारत्वम्। यद्यपि

'इतरे तु' इति कथनेन नाऽनुमातुं शक्यते यदिदं रसगङ्गाधरकृतो मतम्, तथापि ध्वनिकृतोक्ते—

"स वक्तुमखिलाञ्शक्तो हयग्रीवाश्रितान्गुणान्।
योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥"

इति पद्य आक्षेप ध्वनित्वं खण्डयतोऽलंकारसर्वस्वकारस्य मतखण्डनावसरे पण्डितराजेन नह्याभास रूप एव निषेध आक्षेप इत्यस्ति वेदस्याज्ञा इति यदुक्तं तेन प्रतीयते यदस्य मते निषेधमात्रमाक्षेपः। निषेधस्य वास्तविकत्वमाभासरूपत्वं वा स्यादिति त्वन्यत्। सर्वालंकारिक-सम्मत आक्षेपे निषेधस्यानुस्यूतत्वम्। स क्वचिदाभासरूपः क्वचिद् वास्तविकः, क्वचिद् विधिनिषेधरूपः क्वचिच्चान्यरूपः। ध्वनिकृतः प्रागुक्ते पद्ये 'तद्गुणवक्ता नास्तीति' निषेध एव व्यङ्ग्व्यः, न तु तदाभासः। स च हयग्रीवाश्रितानां गुणानामपरिमितत्वमभिव्यनक्ति।

**विरोधः—**

पदार्थद्वयभासमानो विरोधो विरोधालंकारः। अयमेव विरोधाभासपदेन व्यपदिश्यते। बाधबुद्ध्यभिभूत एव विरोधो विरोधालंकारः। तदतिरिक्तश्च दोष एव। विरोधश्चैकाधिकरणसम्बद्धत्वेन प्रसिद्धयोरप्यर्थयोर्भासमानसमानाधिकरणासम्बद्धत्वमेकाधिकरणासम्बद्धत्वेन प्रसिद्धयोरेकाधिकरणसम्बन्धत्वेन प्रतिपादनं वा। तथा चोक्तम्—

"विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः"

स दशधा। तथाहि जातिगुणक्रियाद्रव्यात्मकाः

चत्वारः पदार्थाः। जाते र्जातिगुणक्रियाद्रव्यै र्विरोधे चत्वारो भेदाः। गुणस्य गुणादिभिस्त्रिभिस्तथात्वे त्रयः। क्रियायाः क्रिया-द्रव्याभ्यां मिथोविरोधे द्वौ। द्रव्यस्य द्रव्येण च विरोध एक इति संकलनया दश भेदाः। अतएव "जातिश्चतुर्भिः" इत्यादि प्रकाशकृताऽवादि। वस्तुतस्त्वत्र जात्यादिपदै धर्ममात्रं विवक्षितम्। तेषामुपलक्षणपरत्वात्। अतः "अगोद्धारकोऽपि नागोद्धारकः कृष्णः" इत्यादौ सखण्डोपाधेरगोद्धारकत्वस्य नागोधारकपदोपस्थापिततदभावेन सह भासमानविरोधस्यापि संग्रहः। पण्डितराजमते द्विविध एव विरोधाभास उचितः शुद्धः श्लेषमूलश्च। तथा चोक्तम्— "वस्तुतो जात्यादिभेदानामहृद्यत्वाच्छुद्धत्वश्लेषमूलत्वाभ्यां द्विविधोज्ञेयः।"

**विरोधविषयकप्राच्यनव्यमतविचारः—**

अप्रतिष्ठमानो विरोधः कथं चमत्कारजनकोऽलंकारव्यपदेशहेतुश्चेति प्राच्य-नव्यमतयोर्विचार्यते। तत्रायं प्राचां सिद्धान्तः यत्रापिशब्दादिर्विरोधद्योतकस्तत्रासौ शाब्दः, अन्यत्र त्वार्थः। आर्थ एव विरोधध्वनित्वम्। न च शाब्दिकनयेऽप्यादिनि-पातानां द्योतकत्वेन कथं विरोधवाचकत्वमिति वाच्यम्। निरूढलक्षणाश्रयपदवद् निरूढव्यञ्जनाश्रयपदस्यापि शक्त्याश्रयसमकक्षत्वात्। "सुप्तोऽपि प्रबुद्धः" इत्यादौ विरोधोदाहरणे शब्दद्वयेन प्रथमं सुप्तत्वप्रबुद्धत्वयोर्धर्मयोरुपस्थितिः। यतः 'इमौ-द्वावपि मिथः प्रतिद्वन्द्वितासम्बन्धिनौ" इति ज्ञानादपि शब्दसहकाराच्च तद्गतविरोध-स्मरणम् ततः "इमौ विरुद्धौ" इति वैयञ्जनिके मानसे वा विरोधे वृत्ते बलवत्या प्रतिबन्धकज्ञानसमग्र्या सुप्त-जागरितयोरभेदबुद्धौ पराहतायां प्रबुद्धपदनिष्ठया द्वि-तीयशक्त्यो पस्थापितं ज्ञानशालित्वरूपमर्थमादायान्वयबोधः, न तु विरुद्ध-जागरि-तत्वरूपधर्ममादाय सः। इत्थं शिथिलमूलायां विरोधबुद्धौ पदार्थद्वस्यान्वयः। निवृत्तापि विरोधधीः कविसरम्भगोचरा चमत्कारबीजम्। अतोऽलंकारत्वव्यपदेश-भाग्।

प्रबुद्धपदस्य ज्ञानशालिरूपार्थेन सहाभिन्नतया विरोधोल्लासक जागरितरू-पार्थोऽपि भासते। तस्य तेनाभेदेन भानस्य बीजं प्रबुद्धरूपैकपदोपस्थाप्यता-रूपोऽभेदाध्यवसायः। इत्थं द्वयोरविरोधे जातेऽपि सहोद्भूता अंशतोऽवशिष्टा विरोधीरपि स्वकार्यं करोत्येव। अतएव सा चमत्कारिणी। न हि सर्वथा निवृत्ता सा चमत्कारजननक्षमा। अतो न विरोधस्य शिथिलमूलत्वमिति नव्यानां पण्डितराजानां मतम्।

वस्तुतः 'सुप्तोऽपि प्रबुद्धः 'इत्यत्र स्वापविरुद्धजागरणाभिन्नविशिष्टज्ञानाश्रय इति बोधः। सुप्त-प्रबुद्धोत्तरगतयोः प्रथमाविभक्त्योरभेदोऽर्थः। अपि शब्देन सुप्त-पदार्थविरोधः प्रबुद्धपदार्थे द्योत्यते। प्रबुद्धपदेनापिरूपगमकसत्तया प्रकरणादेरनि-यमाच्च जागरितज्ञानशालिरूपार्थद्वयं युगपदुपस्थाप्यते। तत्राभेदस्य मुख्यवाक्यार्थत्वात् तद्योग्यार्थस्य विरुद्धार्थश्लेषभित्तिकाभेदाध्यवसानेन विरुद्धा-र्थस्य जागरणस्य ज्ञानशालिन्यर्थे विशेषणत्वम्। ततः प्रागुक्तो बोधः। अपि शब्दा-भावे शाब्दान्वयबोधे वृत्ते सहृदयतावशोन्मिषिते द्वितीयार्थे विरहाद्युद्बोधकसहकृतैकसम्बन्धिज्ञानविधया विरोधोपस्थितौ व्यञ्जनयैव तादृशो

बोधः । अतएवापिपदाभावे विरोधस्य व्यङ्ग्यत्व मिति प्राचां सिद्धान्तः । विरोधस्याभासत्वं चाहार्यज्ञानविषयत्वेन कार्यानिष्पादकत्वेनेति गुरुमर्मप्रकाशकृत् ।

**विभावना :—**

कारणाभावेऽपि फलोत्पत्तिकथनं विभावना । तथा चोक्तं मम्मटेन 'क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना' इति । क्रियापदमत्र कारणपरम् । रसगङ्गाधरकृतो विभावनालक्षणमित्थमेव । अत्र विशेषं वक्ष्यामि । प्रथमं कारणाभावफलोत्पत्यो र्विरोध आभासते, किन्तु वस्त्वन्तरस्य कारणत्वकल्पनया निवर्तते । कार्यांशे सादृश्यमूलः श्लेषभित्तिकोऽभेदाध्यवसायः ।

यथा—

'विनैव शस्त्रं हृदयानि यूनां
विवेकभाजामपि दारयन्त्यः ।
अनन्तमायामयवल्गुलीला
जयन्ति नीलाब्जदलायताक्ष्यः ॥'

अत्र शस्त्ररूपकारणाभावेऽपि हृदयविदारणं कार्यमुक्तम् । दारणं द्विधाभवनं मुख्यं कामजन्यपीडाविशेषश्च गौणः । सादृश्यमूलाभेदाऽध्यवसायेनानयोर्भेदे स्थगिते द्विधाभवनकारणमपि शस्त्रं काम-पीडाया अपि कारणं सम्पद्यते । तस्य कारणस्याभावोऽत्र कण्ठत उक्तः । एवं कारणाभाव-कार्ययोराभासमानो विरोधो कामिनीविलासानां युवहृद्दारणे कारणत्वकल्पनया निवर्तते । इत्थमत्र कार्यांशेऽभेदाध्यवसानरूपातिशयोक्तिरनुप्राणिकेति सिद्धम् । अत्र कारणाभावस्य बाधकता, बाध्यता च कार्यस्य । न च वैपरीत्यमिति वाच्यम् । काल्पनिकस्य कार्यस्य वास्तविककारणाभावेन बाध्यताया एवौचित्यात् । विरोधालंकारे विरोधस्य समबलत्वमिति ततोऽस्या विशेषः । पण्डितराजाः कार्यांशनिष्ठ विषयितावच्छेदकावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नप्रतियोगिताकत्वेन कारणाभावं विशेषयन्ति । अतस्तादृशप्रतियोगिताककारणाभावेऽपि कार्योत्पत्तिर्विभावनेति निष्कर्ष आयाति । लक्षणसमन्वय इत्थम्-प्रागुक्तपद्ये कार्यांशे द्विधाभवनं विषयि । तन्निष्ठा विषयिता, तदवच्छेदकं द्विधाभवनत्वम्, तेनावच्छिन्ना द्विधाभवननिष्ठा कार्यता, तादृशकार्यतानिरूपिता कारणता शस्त्रे, तस्या अवच्छेदकं शस्त्रत्वम्, तदवच्छिन्न-शस्त्र-रूपकारणभावनिरूपिता शस्त्रनिष्ठा

प्रतियोगिता । तादृशप्रतियोगिताकः शस्त्ररूपकारणाभावोऽत्र वर्णितः । कारणाभावस्येत्थं विशेषणेन 'खला विनैवापराधं दहन्ति खलु सज्जनान्' इत्यादौ न विभावनालक्षणातिव्याप्तिः । कार्यांशदाहनिष्ठविषयितावच्छेदकदाहत्वावच्छिन्नतद्गतकार्यतानिरूपितकारणताया अपराधेऽभावेनापराधत्वस्य प्रतियोगिताऽवच्छेदकत्वाभावात् । अर्थादपराधत्वस्य न साक्षाद्दाहनिष्ठकार्यतानिरूपितकारणताऽवच्छेदकत्वमिति न विभावनातिप्रसंगः ।

इत्थं पण्डितराजमते मम्मटोक्ताया निगीर्याध्यवसानरूपाया अतिशयोक्त्या-उदाहरणे

'कमलमनम्भसि कमले च कुवलये तानि कनकलातिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥'

इति पद्ये विभावना 'कमलमनम्भसि' इत्यत्र सा अम्भोरूपकारणाभावस्य नञा बोधनाच्छाब्दी, अन्यत्र 'कमले च कुवलये' इत्यादौ चार्थीति त्वन्यत् । अत्र विषयितावच्छेदककमलत्वावच्छिन्नकार्यतानिरूपिताम्भोनिष्ठ- कारणातावच्छेदकाम्भस्त्वविच्छन्नाम्भोनिष्ठप्रतियोगिताकोऽभाव उक्त एव ।

**विशेषोक्तिः—**

सत्यपि प्रसिद्धकारणकलापे वर्ण्यमान फलानुत्पत्तिरूपाया विशेषोक्त्यास्त्रयो भेदाः—उक्तनिमित्ता, अनुक्तनिमित्ताऽचिन्त्यनिमित्ता च । अनुक्तनिमित्तायां निमित्तस्य निमित्ततावच्छेदकरूपेण चिन्त्यत्वम् । अचिन्त्यनिमित्तायां न तस्य तथा तत् । अपितु भविष्यति किञ्चिन्निमित्तमित्याकारेण सामान्यतो निमित्त-चिन्तनम् । अयमेव भेदोऽनुक्तनिमित्ततातोऽचिन्त्यनिमित्तायाः । यथा—

"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरताऽपि तनुं तस्य शम्भुना न हृतं बलम् ।"

इत्यत्र शम्भुकर्तृककामबलाहरणे निमित्तमचिन्त्यम् । केनचिन्निमित्तेन भाव्यमिति सामान्यतो वक्तुं शक्यते । इत्थं विशेषोक्तिस्त्रिधेति मम्मटाचार्यः । अनुक्तनिमित्तायां निमित्तस्य चिन्त्यत्व-विशेषणमयुक्तम्, भेदान्तरकल्पनाप्रयुक्तगौरवापत्तेः । तस्माद् यत्र चिन्त्यमचिन्त्यं वा निमित्तं तत्रानुक्तनिमित्तैव विशेषोक्तिः । अतोऽनुक्तनिमित्तातोऽचिन्त्य-निमित्तायाः पृथग्भावोऽनुचित इति

पण्डितराजः । वस्तुतो भेदहेतौ सति भेदाकल्पनमयुक्तमिति विशेषोक्ते र्मम्मटोक्तं त्रिधात्वं सम्यगेवेति वयम् ।

अयं पुनरपरोविचारः-एककारणाभावेऽपि फलावचनं विशेषोक्तिर्भवितुमर्हति । यथा 'कर्पूर इव दग्धोऽपि शक्तिमाञ्यो जने जने' इत्यादौ दाहरूपस्य एकस्य कारणस्य सत्त्वेऽपि मकरकेतोश्शक्तिमत्वाभावरूपस्य फलस्यावचनम् । तत्र च विशेषोक्ति रुक्तनिमित्ता मम्मटेन स्वीकृता । तस्मात् 'विशेषोक्तिरखण्डेषु कारणेषु फलावचः ।' इति सूत्रे कारणगतं बहुत्वमविवक्षितमेव । 'सूत्रे लिङ्गवचनमतन्त्रम्' इति न्यायात् । अन्यथा 'कर्पूर इव' इत्यादौ विशेषोक्तिर्न स्यात् । परन्तु 'प्रसिद्धकारणकलापसामानाधिकरण्येन वर्ण्यमाना कार्यानुत्पत्ति र्विशेषोक्तिः' इति पण्डितराजोक्तविशेषोक्तिलक्षणस्थकलापशब्दार्थश्चिन्त्यः ।

यत्र कारणाभावकार्याभावौ नञादिभिः साक्षादुक्तौ तत्र विभावना विशेषोक्त्योः शाब्दत्वम् । अन्यत्र चार्थत्वमस्फुटत्वं च । यथा 'यः कौमारहरः स एव हि वरः' इत्यादौ काव्यप्रकाशीयपद्ये विभावनाविशेषोक्त्योरस्फुटत्वम् । अतएव 'अत्र न कश्चित् स्फुटोऽलंकारः' इति मम्मटेनोक्तम् । वस्तुतो विभावनाविशेषोक्त्योर्व्यङ्ग्यत्वेऽस्फुटत्वकथनमयुक्तम् । अन्यथा प्रतीयमानोत्प्रेक्षादीनामपि तथात्वापत्तिः । अस्फुटत्वे प्रतीयमानत्वं न निमित्तम् । अपितु चमत्कारविरहः । चमत्कारविरहेऽलंकारत्वं नोपपद्यते । अलंकारत्वं चेन्नास्फुटत्वमिति प्रागावेदितम् ।

**असंगति :—**

मम्मटमते विरुद्धत्वेनात्यन्तं भासमानं कार्यकारणयोर्वैयधिकरण्यमसंगतिः । पण्डितराजमते समानाधिकरणत्वेन प्रसिद्धयोः पदार्थयो र्भासमानो वैयधिकरण्यविरोधः सा । तौ कार्यकारणरूपौ स्याताम्, अन्यथा वेति त्वन्यत् । अतो नात्र 'नेत्रं निरञ्जनं तस्याः शून्यास्तु वयमद्भुतम्' इतिपद्येऽसंगतिलक्षणाव्याप्तिः । कार्यकारणयोरेव भिन्नदेशताया मसङ्गतित्वेऽत्राव्याप्तिः स्फुटैव । नहि निरञ्जनत्वशून्यत्वयोः कार्यकारणभावः । अपितु शुद्धं सामानाधिकरण्यम् । अतः 'भिन्नदेशतयात्यन्तं कार्यकारणभूतयोः' इत्यादि सूत्रे कार्यकारणभूत-पदं समानाधिकरणमात्रोपलक्षणमिति स्वीकार्यम् ।

**विषमम्:—**

अननुरूपसंसर्गरूपस्य विषमस्य चत्वारो भेदाः 'क्वचिद् यदतिवैधर्म्यात्' इत्यादिसूत्रैः प्रतिपादिताः काव्यप्रकाशे। यत्रातिवैधर्म्येण वस्तुद्वयसंसर्गो नानुरूपस्तत्राद्यः। कर्तृव्यापारेण यत्र फलानाप्तिरनर्थावाप्तिश्च तत्र द्वितीयः। कार्यगुणेन कारणगुणस्य विरुद्धत्वे तृतीयः। कार्यक्रियाकारणक्रियायास्तथात्वे चतुर्थः। इत्थं सूत्रे विभाग उपलक्षणपरः।[१] तेन सम्बन्धिनोरानुरूप्याभावात्तस्यान्येऽपि भेदा भवितुमर्हन्ति। यथा प्रकाशकृता मूल एव 'विपुलेन सागरशयस्य' इत्यादिपद्यमवयवावयविनोः सम्बन्धिनोरननुरूपत्व उदाहृतम्। रसगङ्गाधरेऽस्यान्येऽपि भेदा निरूपिताः। तेऽपि काव्यप्रकाश लक्षणेऽन्तर्भवन्ति। विस्तरभिया ते न प्रदर्श्यन्ते। ते भेदाः प्रदर्शिता एव रसगङ्गाधरे।

**समम्:—**

अनुरूपसंसर्गस्य समस्य द्विधात्वम्। तथाहि संसर्गो द्विधा संयोगादिरूपः कार्यकारणभावात्मकश्च। आद्यो द्विधा-सता सतो योगादिरूपः, असताऽसतो वा सः। कारण-समानगुणक्रियोत्पत्तिवर्णनस्थले द्वितीयः। इत्थमस्य त्रयोभेदा रसगङ्गाधरेऽपि निरूपिताः।

**विचित्रम्:—**

इष्ट-सिद्धिमभिलषता कर्त्रा क्रियमाणमिष्टावाप्ति-विपरीताचरणं तदननुकूलाचरणं विचित्रमलंकार इति रसगङ्गाधरकृत्। न चायं विषमभेद इति वाच्यम्, विषयभेदात्। तथाहि विषमस्य कार्यकारणयोर्मिथो गुणवैलक्षण्यं विषयः, अस्य तु इष्ट साधनाय विपरीता कृतिः। तत्र कार्यकारणभावः प्राकृतः, न पुरुषसम्बन्धजनितः। अत्र तु कल्पितः।

काव्यप्रकाशेऽयमलंकारो नोपलभ्यते। अस्य विषमालंकार एवान्तर्भावः। अत्राप्यननुरूपसम्बन्धस्य प्राक् प्रतीतेः।[२]

---

१. सूत्रे विभाग उपलक्षणधरः। —का० प्रदी० ५९६ पृ०।

२. एवमिष्टसिद्ध्यर्थमिष्टैषिणा क्रियमाणमिष्टविपरीतयत्नाचरणमपि विषममेव। यथा—नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम् 'इत्यत्र वाच्यप्रतीतिवेलायां योगवैषम्य-प्रतीतेः। एतेनात्र विचित्रालंकारः पृथगित्यपास्तम्।' —का० प्र० वा० टी० ६२३ पृ०।

**अधिकम् :—**

एतदलंकारविषये मम्मटपण्डितराजयो र्मतैक्यम्। उभयोरधिकलक्षणं साम्यमेवावगाह्ते। तथाहि—

**'महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात्।**
**आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत्॥'**

इति मम्मटः। 'आधाराधेययोरन्यतरस्यातिविस्तृतत्वादिसिद्धिफलकमितर-स्यातिन्यूनत्वकल्पनमधिकम्' इति पण्डितराजः। यत्रातिविस्तृतिं व्यञ्जयितुमाधा-रस्य अल्पस्यापि बृहदाधेयापेक्षया, आधेयस्यापि तथाविधस्य वृहदाधारापेक्षया वृहत्त्वं कल्प्यते तत्रायमलंकारः। 'कल्प्यते' इति कथनेन यत्राधाराधेययोरन्यतरस्य न्यूनत्वं वृहत्त्वं च वास्तवं तत्र नायमलंकारः।

**अन्योन्यम् :—**

पदार्थयोः परस्परमेकजातीयक्रिययो र्जननेऽन्योन्यालंकार इति मम्मटः। तथा चोक्तम्—

**'क्रियया तु परस्परम्।**
**वस्तुनोर्जननेऽन्योन्यम्॥'**

पदार्थयोः परस्परं जन्यजनकभावोऽनुपपन्नः, एकस्याऽपरं प्रति तस्य चैकं प्रति पौर्वापर्यविरहात्। अतएव सूत्रे क्रिययोरिति प्रोक्तम्। ततः क्रियाजननद्वारा तयो-र्जन्यजनकभावो भवितुमर्हति। अतएव वृत्तौ' अर्थयोरेकक्रियामुखेन परस्परं कार-णत्वे सत्यन्योन्यनामालंकार इत्यभिहितम्। रसगङ्गाधरकाराः पदार्थयोः पस्परमेकजातीय गुणजनकत्वेऽपि अन्योन्यालंकारं मन्यन्ते। अतएव 'द्वयोरन्योन्ये-नान्योन्यस्य विशेषाधानमन्योन्यमिति लक्षयित्वा विशेषश्च क्रियादिरूपः इति व्याजह्रुः। आदिपदेन गुणस्य ग्रहणम्। उदाजहार च—

**'सुदृशो जितरत्नजालया सुरतान्तश्रमबिन्दुमालया**
**अलिकेन च हेमकान्तिना विदधे कापि रुचिः परस्परम्।**

इह सुरतजन्यस्वेदसमूहस्य ललाटस्य च परस्परं स्वस्वगतरुचिरूपगुणजन-कत्वमुपनिबद्धम्। नेह विधानरूपक्रियात्मकविशेषाधानम्, विधानक्रियाया अहृद्य-त्वात्। पण्डितराजस्यैवं सिद्धान्तं स्वीकृत्य काव्यप्रदीपोद्योतकारेण काव्यप्रकाश-

स्यान्योन्यलक्षणगतं क्रिययेति पदं गुणस्याप्युपलक्षणमुक्तम्। तेन मम्मटमतेऽपि पदार्थयो र्गुणमुखेनापि कारणत्वे सत्ययमलंकारः सिद्ध्यति।

**विशेषः—**

अयं त्रिविधः। अप्रसिद्धाधारमन्तरा यत्र किञ्चिद्वस्तु वर्ण्यते तत्र आद्यः प्रकारः। एकस्य वस्तुनो युगपदनेकाधारवृत्तित्वे वर्ण्ये द्वितीयः। किञ्चिदन्यकार्यमारभमाणस्य कर्तुरशक्यासम्भावितवस्त्वन्तरनिर्वर्तनं यत्र वर्ण्यते तत्र तृतीयः। एतदन्यतमत्वमस्य लक्षणम्। अतिशयोक्तिरेषु प्रभेदेषु प्राणत्वेनावतिष्ठते। अतः प्रसिद्धाधारमन्तराऽऽधेयस्य, तस्य च युगपदनेकाधाराश्रितत्वेन वर्णनस्य, एक यत्नेन कार्यद्वयकरणस्य च न विरोधः। इति मम्मटस्य हृदयम्। विशेषालंकारस्य तृतीयंभेदोदाहरणे पण्डितराजस्य मम्मटस्य च मतैक्यं नास्ति। तृतीयः प्रभेदः पृथगलंकारः, न तु विशेषप्रकारविशेषः। प्रकाशकृता रूपकादिवन्न सामान्यलक्षणमभिहितं विशेषस्य येन तृतीय प्रभेदस्यास्मिन्नन्तर्भावः स्यात्। अन्यतमत्वं लक्षणमननुगतम्। अतोऽयं विशेषस्यैव प्रकार इति राजाज्ञामात्रम्। 'येन दृष्टोऽसि देव त्वं तेन दृष्टो हुताशनः तेन दृष्टा वसुन्धरा' इत्यादौ हुताशनवसुधादेवस्त्वंन्तरस्य दर्शनादेरशक्यासम्भावितत्वयोरभावाद् विशेषा लंकारासम्भवेन निदर्शना स्वीक्रियते यदा तदा 'येन दृष्टोऽसि देवत्वं तेन दृष्टः सुरेश्वरः' इत्यादौ विशेषालंकारेऽपि सैव स्वीकार्या। हुताशनस्य सुरेश्वरस्य च दर्शने नास्ति विच्छितिविशेषः। तस्मात्—

'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ

करुणाविमुखेन मृत्युना हरता त्वां बत किं न मे हृतम्॥'

इति पद्ये काव्यप्रकाशस्थे तृतीय विशेषोदाहरणे निदर्शनैव, पर्यन्ते गृहिणीसचिवादिभिरिन्दुमत्या औपम्यस्यैव प्रतीतेः। अतस्तृतीयविशेषालंकारस्य तादृशमुदाहरणं प्रदेयं यत्र नोपमानोपमेयभावः। यथा—

'किं नाम तेन न कृतं सुकृतं पुरारे

दासीकृता न खलु का भुवनेषु लक्ष्मीः।

भोगा न के बुभुजिरे विबुधैरलभ्या

येनार्चितोऽसि करुणाकर हेलयापि।' इति।

अत्रैकेनार्चनेनाशक्यधर्मार्थकामरूपत्रिवर्ग-प्राप्तिरुपनिबद्धा । अर्चनत्रिवर्गयोः कार्यकारणभावः । अर्चनं कारणं त्रिवर्गश्च कार्यम् । अत्रोपमा प्रतीतेरभावान्न निदर्शनागन्धः । एवमशक्यबस्त्वन्तरनिर्वर्तने नाभेदाध्यवसायरूपातिशयस्यावश्यकता । इति पण्डितराजस्याशयः ।

वस्तुतः 'किं नाम तेन न कृतम्' इत्यादिपद्येऽपि विशेषस्य तृतीयः प्रकारोऽसम्भवः । एकेन यत्नेनाशक्यवस्त्वन्तरनिर्वर्तनं हि तच्छरीरम् । नहि त्रिवर्ग प्राप्तेरत्राशक्यत्वं वक्तुं शक्यम् । निगमागमप्रसिद्धमाहात्म्यपुरारिसमर्चनस्य चतुर्वर्गप्राप्ति जनने सामर्थ्यशालित्वात् । यदि मोक्षदमपि पुरारिपूजनन्तर्हि कोऽसौ वराकः त्रिवर्गः, यस्य तेन निर्वर्तन मशक्यं स्यात् । अतस्त्रिवर्गप्राप्ते रशक्यप्राप्तित्वं विरुद्धम् ।

**व्याघातः—**

कर्त्रा येन कारणेन किञ्चित् कार्यं निष्पादितं निष्पादयितुमिष्टं वा तदन्येन कर्त्रा तेनैव कारणेन तद्विरुद्धं कार्यं तथाकृतं तथेष्टं वा वर्ण्यते यत्र स व्याघातः । विरुद्धेन निष्पादितेन निष्पिपादयिषितेन वा कार्येण पूर्वकृतस्य कर्तुमिष्टस्य वा कार्यस्य व्याहतेर्व्याघात इत्यन्वर्थ नामाऽस्यालंकारस्य । मम्मटकृते लक्षणे 'यद्यथा साधितं केनाप्यपरेण तदन्यथा' इत्यादौ साधितपदं सिषाधयिषितस्याप्युपलक्षणम् । तेनोभयविधव्याघातसंग्रहः । मम्मटेनेदं पद्यमुदाहृतम्—

**'दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।**

**विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥'**

अत्र हरेण दृशैव कामो दग्धः, स्त्रियश्च तं दृशैव जीवयन्ति इत्युपनिबद्धम् । दृष्टिहेतुककामदाहस्य तद्धेतुकजीवनेन विरुद्धेन व्याघाताद्व्याघातः । यद्यपि वामलोचनादृशां हरदृशश्च भिन्नत्वम्, अतो नैकयैव दृशा कामदाहोज्जीवने, तथापि वामलोचना दृशो हरदृशोश्चाभेदाध्यवसायेनैकत्वं न विरुद्ध्यते ।

ननु अस्मिन् पद्ये व्यतिरेक एवालंकारः, न तु व्याघातः विरूपाक्षस्य जयिनीरित्युक्त्या व्यतिरेकस्यैव प्रकाशनात् । न चात्र व्याघातो व्यतिरेकोत्थापक इति वाच्यम्, तस्यालंकारताया अनिष्पत्तेः । नह्यलंकारोत्थापकोऽलंकारो भवति, इति चेन्न, व्याघातविषये सर्वत्र व्यतिरेकस्य स्थितावपि व्याघातस्य पृथक् व्यपदेशत्वे विरोधाभावात् । अलंकारान्तरसम्बद्धा अन्येऽप्यलंकारा भवन्ति । यथाऽनन्वया-

समौ । एवमिहापि । व्यतिरेकापेक्षया पृथग् विच्छित्ति-विशेषजनकत्वं व्याघातस्यानुभवसिद्धमिति प्राचां सिद्धान्त इति पण्डित-राजकृत-शङ्कासमाधानाशयः ।

**कारणमाला :—**

इयमलंकृतिः श्रृङ्खलामूला । श्रृङ्खला पङ्क्तिरूपेण निबद्धानां पदार्थानां पूर्वपूर्वस्योत्तरोत्तरस्मिन्, उत्तरोत्तरस्य वा पूर्वपूर्वस्मिन् संसृष्टत्वम् । कार्यकारणभावानुगुणैषा कारणमूला । एषा द्विधा-यत्र पूर्वं पूर्वं कारणं परंपरं च कार्यं तत्राद्या । यत्र पूर्व-पूर्वं कार्यं परं परं च कारणं तत्र द्वितीया । मम्मटेन—

**'यथोत्तरं चेत् पूर्वस्य पूर्वस्यार्थस्य हेतुता ।**

**तदा कारणमाला स्यात्'**

इत्यस्या अलंकृतेर्लक्षणमुक्तम् ।

इदं "यथापूर्वं परस्य परस्य कारणत्वे" इत्यस्याप्युपलक्षणम् । तेन तन्मतेऽपि कारणमालाया द्वैविध्यमुक्तम् । पण्डितराजेनापि तथैवोक्तम् ।

**'जितेन्द्रियत्वं विनयस्य कारणं**

**गुणप्रकर्षो विनयादवाप्यते ।**

**गुणप्रकर्षेण जनोऽनुरज्यते**

**जनानुरागप्रभवा हि सम्पदः ॥'**

इति पद्यमस्या अलंकृतेरुदाहरणं मम्मटेनोक्तम् । अत्र जितेन्द्रियत्वाद् विनयः, तस्माद्गुणप्रकर्षः तस्माज्जनानुरागः, तस्मात् सम्पदः, इति पूर्वपूर्वस्य उत्तरोत्तरं प्रति हेतुता निबद्धा । हेतोः प्रागुक्तेः प्रथमा कारणमाला । पण्डितराजा इदमुदाहरणं खण्डयन्ति । तेषामयमभिप्रायः—यदि प्राक् कारणोक्तिस्तर्हि तस्य किं कारणं तस्यापि किं कारणम्, तत्कस्यचित्कारणं तदपि कस्यचित् कारणमितिवाऽऽकाङ्क्षोदेति । यदि पूर्वं कार्योक्तिस्तदा तस्य कार्यं तस्यापि कार्यमिति, तत् कस्यचित् कार्यं तदपि कस्यचिदिति वाऽऽकांक्षा भवति । अतः पूर्वं सर्वथैव यः कार्यकारणतोपस्थापकः शब्दः प्रयुक्तः स एव पश्चादपि प्रयोज्यः । कारणतायाः कार्यताया वा पदान्तरेणोपस्थाने भग्नप्रक्रमत्वं दोषः । 'जितेन्द्रियत्वम्' इत्यादिविषये जितेन्द्रियत्वस्य विनयकारणत्वं कारणपदेनाभिहितम्, विनयस्य तु गुणप्रकर्षकारणत्वं न कारणपदेनाभिहितम्, अपितु विनयपदोत्तरवर्तिन्या पञ्चम्या तस्य प्रतीतिः । अतो भग्नप्रक्रम-

त्वम्। पदान्तरेणार्थाभिधानेऽर्थबोधे भेदः स्पष्टः। शब्दस्यापि प्रकारतया शाब्दबोधे भाननियमात्। घटपदोपस्थाप्यो घटः कलशपदेन यदि बोध्यते तदा शाब्दबोध-भेदः। घट-कलशरूपशब्दप्रकारद्वयकृतो घटत्वावच्छिन्नविषकबोधे विशेष उपलभ्यते। 'विनयो गुणप्रकर्षस्य कारणमिति' कारणत्वं यदि कारणपदेनाभिधीयेत तर्हि न दोषः। एवमुत्तरत्रापि। एवं क्रमेण निबन्धनमाकाङ्क्षानुरूपत्वाद्रमणीयम्। तस्मान्मम्मटस्येदमुदाहरणमरमणीयमेव।

वस्तुतो मम्मटेनास्मिन्नलंकारे पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणता कार्यता वा विवक्षिता। सा कारणता पदान्तरेणापि बोधायितुं शक्या। तथा कार्यतापि। पदान्तरेण तदभिधाने भवतु नाम भग्नप्रक्रमत्वमिति त्वन्यत्।

एकावली :—

संसर्गस्य विशेष्यविशेषणभावरूपत्वे सैव श्रृंगला एकावली। सा च द्विधा-पूर्वपूर्वस्योत्तरोत्तरं प्रति विशेष्यत्व आद्या। तस्योत्तरोत्तरं प्रति विशेणत्वे द्वितीया। आद्यापि द्विधा-उत्तरोत्तरविशेषणस्य स्थापकत्वे प्रथमा। तस्य चापोहकत्वे द्वितीया। स्थापकत्वं स्वसम्बन्धेन विशेष्यतावच्छेदकनियामकत्वम्। यथा 'स पण्डितो यः स्वहितार्थदर्शी' इत्यत्र पण्डितो विशेष्यः। विशेष्यतावच्छेदकं पण्डितत्वम्। तच्चोत्तरवर्ति-स्वहितार्थ-दर्शित्वेन विशेषणेन नियम्यते। अर्थात् पण्डिते यदा स्वहितार्थदर्शित्वरूपस्य विशेषणस्य सम्बन्धो भवति तर्हि पण्डिते पण्डितत्वं निश्चीयते। अपोहकत्वं च स्वव्यतिरेकेण विशेष्यतावच्छेदक व्यतिरेक-बुद्धिजनकत्वम्। यथा 'नार्यः स यो न स्वहितं समीक्षते' इत्यत्रार्यो विशेष्यः। आर्यत्वं विशेष्यतावच्छेदकम्। आर्ये तस्याभावबुद्धिः स्वहितसमीक्षणरूपविशेषणाभावेन जन्यते। यद्यपि स्थापकेऽपोहकत्वमपोहकत्वे स्थापकत्वं च गम्यते तथापि तत्र शब्देन निश्चित इति कृत्वा पृथग् भेदौ स्वीकृतौ। इत्थमेकावली त्रिधेति पण्डितराजस्याभिप्रायः।

'स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम्।
विशेषणतया यत्र वस्तु सैकावली द्विधा॥'

इति काव्यप्रकाशकारः। यत्र पूर्वं पूर्वं प्रति उत्तरोत्तरस्य पदार्थस्य विशेषणत्वेन स्थापनं निषेधो वा तत्रैकावली। स्थापनं निषेधो वा बाहुल्येनाभिमतम्। एकस्य स्थापने निषेधे वा न चमत्कारः। स्थापनं विधिः सूत्रस्थोऽपोहो निषेधः। यथापूर्व-

मित्यत्र वीप्सायामव्ययीभावः। सूत्रस्थविशेषणतयेतिपदं विशेष्यतयेत्यस्योपलक्ष-णम्। तेन यथोत्तरस्य यथापूर्वं प्रति विशेष्यतयापि स्थापने एकावलीति उद्योतकारा नागेशभट्टाः। इत्थं मम्मटमतेऽपि अस्यालंकारस्य त्रैविध्यं सिद्धयति। यथा—

"धर्मेण बुद्धिस्तव देव शुद्धा बुद्ध्या निबद्धा सहसैव लक्ष्मीः

लक्ष्म्या च तुष्टा भुवि सर्वलोका लोकैश्च नीता भुवनेषु कीर्तिः।

इत्यत्रोत्तरोत्तरं विशेषणं पूर्वंपूर्वं प्रति विशेष्यम्। इत्थमेकावली-भेदविषये मम्मटपण्डितराजमतयोः साम्यमेव।

**सारः—**

संसर्गस्योत्कृष्टापकृष्टभावरूपत्वे शृङ्खलैव सारः। स द्विधा पूर्वपूवपिक्षयोत्त-रोत्तरस्य यत्रोत्कर्षस्तत्राद्यः। पूर्वपूर्वापेक्षया यत्रोत्तरोत्तरस्यापकर्षस्तत्र द्वितीयः। पुनरयमलंकारो द्विधा-एकविषयत्वानेकविषयत्वाभ्याम्। एकविषयतायामवस्था-दिकृत-वैशिष्ट्याश्रयणमावश्यकम्। तदनाश्रयणे कस्यचिदपि वस्तुनः स्वापेक्षया स्वस्यैवोत्कृष्टापकृष्टत्वयोरसम्भवात्। एकविषय उत्तरोत्तरोत्कर्षस्येदमुदाहर-णम्—

"जम्बीरश्रियमतिलङ्घ्य लीलयैव

व्यानम्रीकृतकमनीयहेमकुम्भौ।

नीलाम्भोरुहनयनेऽधुना कुचौ ते,

स्पर्धेते खलु कनकाचलेन सार्धम्॥"

अस्मिन् पद्ये जम्बीरादिस्वरूपरूपावस्थाविशिष्टाभ्यां स्तनाभ्यां हेमकुम्भाका-रधारणादिरूपावस्थाविशिष्टयोस्तयोरेवोत्कर्षो निबद्धः। यद्यपि द्रव्ययोः कुचयोः परिणामभेदेन भेदो वक्तुं शक्यः, तथापि कुचत्वेन तयोरेकत्वमक्षतमित्येकविषय-त्वमविरुद्धम्।

"संसारे चेतनास्तत्र विद्वांसस्तत्र साधवः।

साधुष्वपि स्पृहाहीनास्तेषु धन्या निराश्रयाः।"

अस्मिन् पद्ये संसाराद्यपेक्षया चेतनादीनामुत्तरोत्तरोत्कर्षो निरूपितः। संसारे चेतनादयो विषयाः भिन्नाः। अतो विभिन्नविषयोऽत्र सारः। अनयैव दिशा पूर्व

पूर्वापेक्षयोत्तरोत्तरस्यापकर्षत्वे भिन्नभिन्नविषयत्वेऽपि उदाहरणानि सम्भवन्ति। इत्थं सारश्चतुर्धा। एवमाशयो ररसगङ्गाधरकृतः।

काव्यप्रकाशकाराः पूर्वपूर्वापेक्षया परावधिमुत्तरोत्तरमुत्कर्षं सारं मन्यमाना व्याजह्रुः— "उत्तरोत्तरमुत्कर्षो भवेत् सारः परावधिः।" तैरस्य भेदा न कृताः।

वस्तुतः पण्डितराजाभिमतोत्तरोत्तरस्यापकर्षरूपो भेदो न सम्यक्। तत्राप्युत्कर्षस्यैव प्रतीतेः। उत्तरोत्तरोत्कर्षो हि द्विधा-श्लाघ्यगुणानामश्लाघ्यगुणानां वा पदार्थानाम्। आद्यानामुत्कर्षः प्राक् प्रदर्शितः। अश्लाघ्यगुणानामुत्कर्षो यथा—

"तृणाल्लघुतरस्तूलस्तूलादपि च याचकः।"

इत्यत्र पूर्वोक्ततृणापेक्षया लाघवोत्कर्षकृतस्तूलंस्योत्कर्षः, ततोऽपि तत्कृतोत्कर्षो याचकस्य। न चात्र तृणापेक्षया तूलादीनामपकृष्टत्वेनापकर्ष एवेति वाच्यम्। लाघवकृतोत्तरोत्तरोत्कर्षस्य विवक्षणात्।

काव्यलिंगम्:—

स्वतोऽनुपपद्यमानार्थोपपादकहेतुः काव्यलिंगम्। स च हेतुः क्वचित् पदार्थरूपोऽनेकपदार्थरूपो वाक्यार्थरूपश्च। इत्थं काव्यलिंगं त्रिधा। लौकिक लिङ्गेऽयतिव्याप्तिवारणाय काव्यपदम्। लिङ्गपदेन हेतुर्विवक्षितः। उक्तं प्रकाशकृता—

"काव्यलिंगं हेतो र्वाक्यपदार्थता।"

मम्मटमतमनुसरता रसगङ्गाधरकृताऽस्यालंकारस्य नानाभेदा निरूपिताः। तथाहि-काव्यलिंगं प्रथमतो द्विधा। सुबन्तार्थरूपं तिड़न्तार्थरूपं च। आद्यं शब्दान्तरार्थविशेषितशरीरं शुद्धैकसुबन्तार्थरीरं च सुबन्तार्थमात्रविशेषितं च। इत्थं सुबन्तार्थरूप आद्यप्रभेदस्त्रिधा। तिङन्तार्थरूपोऽपरो भेदो द्विधा साक्षात् परम्परया वाक्यान्तरार्थविशेषित शरीरः सुबन्तार्थमात्रविशेषित वपुश्च। तिङन्तार्थं रूपः शुद्धो भेदोऽसम्भवः॥क्रियायाः कारकविशेषितत्वावश्यम्भावेन शुद्धत्वाभावात्। तस्मात् प्राचां मतमनुसृत्य काव्यलिंगस्य पञ्च प्रकारा रसगङ्गाधर उक्ताः।

वस्तुतो रसगङ्गाधरकारमते काव्यलिंगस्य नालंकारत्वम्। विच्छित्तिविशेषस्यानुपलम्भात्। विच्छित्तिश्चालंकारभेदहेतुभूता जन्यतासंसर्गेण काव्यनिष्ठा कविप्रतिभा-तज्जन्यत्वविशिष्टा वा चमत्कारिता। नह्यत्राऽनयोरन्यतरस्य सम्भवः। वस्तुसिद्ध-हेतु-हेतुमद्भावस्य कविप्रतिभानिर्वर्त्यत्वाभावेन तत्प्रतिभाजन्या चमत्कृतिरपि दुर्लभा। श्लेषादिसम्मिश्रणजन्या विच्छित्तिर्यदि स्वीक्रियते तदापि

काव्यलिंगस्यालंकारताया असिद्धिः । श्लेषादीनामेव चमत्कार-जनकत्वेन तेषामेवालंकारतायाः सिद्धेः । न च श्लेषाद्युपस्कृतस्य काव्यलिंगस्यालंकारत्वमिति वाच्यम् । उपस्कारकश्लेषादि-जन्य-चमत्कारापेक्षयोपस्कार्यकाव्यलिंगे चमत्कार-वैलक्षण्यस्यानुपलम्भात् । यत्रोपस्कारकजन्यविच्छित्त्यपेक्षयोपस्कार्यजन्यविच्छित्ते र्विशेषस्तत्र पृथगलङ्कारत्वम् । यथातिशयोक्तिरूपोपस्कारकजन्यचमत्कारापेक्षयो-पस्कृतयो र्हेतुफलोत्प्रेक्षयोः पृथक् चमत्कारस्योपलम्भेन तयोः पृथगलंकारत्वम् । यत्रोपस्कारकवैचित्र्यएव विश्रान्तिस्तत्र नोपस्कार्यमलंकारः । तस्मात् काव्यलिंगं निर्हेतुरूपदोषाऽभावमात्रम् । इत्थं पण्डितराजस्य मतमिति प्रतीमः ।[1]

**अर्थान्तरन्यासः—**

सामान्यस्य विशेषेण विशेषस्य सामान्येन वा साधर्म्येण वैधर्म्येण वा समर्थ-नमर्थान्तरन्यास इति मम्मटस्याशयः । समर्थनं निश्चयः । इत्थमयं चतुर्धा । पण्डि-तराजा अस्य द्वादश भेदानामनन्ति । तथाहि—प्रकृतस्य सामान्यस्याप्रकृतेन विशेषेण समर्थनं प्रथमो भेदः । तथाभूतस्य विशेषस्य तथाभूतेन सामान्येन समर्थनं द्वितीयः । प्रकृतस्य सामान्यस्य प्रकृतेन विशेषेण समर्थनं तृतीयः । तथाविधस्य विशेषस्य तथाविधेन सामान्येन समर्थनं चतुर्थः । अप्रकृतस्य सामान्यस्य प्रकृतेन विशेषेण समर्थनं पंचमः । तथाभूतस्य विशेषस्य तादृशेन सामान्येन समर्थनं षष्ठः । इत्थं षोढा । तत्र क्वचित् साधर्म्येण क्वचिच्च वैधर्म्येण समर्थनमिति द्वादशत्वम-र्थान्तरन्यासस्य । प्रकृतेन अप्रकृतसमर्थनस्थले प्रकृतस्य समर्थनीयस्य पर्यन्ते प्रकृत एव पर्यवसानम् । तस्यापाततः प्रतीयमानमप्रकृतत्वमादाय प्रकृतेनाप्रकृतसमर्थन-मूलाश्चत्वारो भेदा वर्णिताः । मम्मटमतेऽप्येते भेदा गृहीता भवन्ति । समर्थ्यस्य प्रकृताप्रकृतत्वमादाय तेनास्य भेदा न कथिता इति कृत्वा न वक्तुं शक्यते यत्तेनैते न स्वीक्रियन्ते ।

**अनुमानम् :—**

अनुमानमित्यत्र भावे ल्युट् । तेनानुमितिरेवालंकारः । सा च साध्यसाधनयो-रुक्तिः । साधनं पक्ष-सपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टम् । साध्यो वह्न्यादिः । अनुमितेः कविप्रतिभोल्लिखितत्व एवालंकारत्वम् । तेनात्र साध्यसाधनयोर्वास्तवि-की व्याप्ति र्न । अपितु काल्पनिकी । उक्तं प्रकाशकृता—

---

१. द्रष्टव्यम्, र० गं० काव्यलिंगप्रकरणम ।

"अनुमानं तदुक्तं यत् साध्यसाधनयो र्वचः ।" साध्यत्वेन साधनत्वेन च प्रतिपादनमिति तदर्थः । मन्ये शङ्क-इत्यादिशब्द-प्रयोग-स्थलेऽनुमानालंकारो वाच्यः । साध्य-साधनयोः सत्त्वे तेषां मन्ये-शङ्क-इत्यादीनामनुमितिबोधकत्वम्, सादृश्यादिनिमित्तसद्भाव उत्प्रेक्षावाचकत्वम् । वक्ति-कथयतीत्यादिप्रयोगेऽनुमिति लक्ष्या । उभयानुपादाने साध्यसाधनाभ्यां तदाक्षेपे सा प्रतीयमानेति नागेशाशयः । पण्डितराजेन 'अनुमितिकरणमनुमानम्' इति स्वोक्तं लक्षणमग्रे खण्डितम् । अनुमितिकरणस्यानुमितित्वे वाच्यत्वादिव्यवस्थाऽनुपपन्ना । तथाहि-ज्ञायमानमनुमितिकरण- मनुमानमितिस्वीकारे करण-(हेतु)-वाचकपदोपादाने तस्य वाच्यत्वमेव स्यात् । लक्ष्यत्वादेरसम्भवःस्यात् । अनुमितिकरण ज्ञानमनुमानमित्यङ्गीकारे ज्ञानस्य वाचक-लक्षकत्वाभावेन वाच्यत्व-लक्ष्यत्वयोरनापात्तिः स्यात् । अतोऽनुमिति रनुमानमित्येव लक्षणं वरम् । तेनानुमानस्य वाच्य-लक्ष्य-प्रतीयमान-ध्वन्यमानत्वानि सिद्धानि । यत्र साध्यं नोपादीयते, साधनमात्रस्योक्तिस्तत्र तस्य ध्वनित्वम् । अनुमितिकरणस्यानुमानत्वे ध्वनित्वं विरुद्ध्येत । करणस्य शब्दतः कथनात् । तस्मादनुमानशब्दे भाव एव ल्युट् स्वीकार्यः । इत्थं मम्मटस्य पण्डितराजस्य चानुमानालंकारविषये मतैक्यमैव । न च मम्मटमते ध्वन्यमानानुमानस्यासङ्गतिः, साध्यसाधनोभयोक्तावेव तेनानुमानस्वीकारादिति वाच्यम् । चित्रालंकारप्रस्तावे ध्वन्यमानस्यालंकार्यस्य तस्य तेन लक्षणाकरणात् । पण्डितराजेन तु तादृशमलंकारलक्षणं विधीयते येन ध्वन्यमानस्यापि सङ्ग्रहो भवति ।

**यथासंख्यम् :—**

क्रमवतां पदार्थानां क्रमेणैवान्वयरूपस्य यथासंख्यस्य द्वौ भेदौ । यत्र तादृशानां तथान्वयः शाब्दस्तत्र शाब्दरूप आद्यो यत्र चार्थ स्तत्रार्थरूपो द्वितीयः । समासाभावस्थले शब्दानामप्यन्वयोऽर्थद्वारा । तत्र प्रथमो भेदो यथा—

"यौवनोद्गमनितान्तशङ्किताः
शीलशौर्यबलकान्तिलोभिताः ।
संकुचन्ति विकसन्ति राघवे
जानकीनयननीरजश्रियः ॥"

इत्यत्र संकुचन्ति-विकासन्तिपदयोरपि क्रमेण यौवनोद्गमादि—
शीलशौर्यादिशब्दाभ्यामपि समन्वयः ।

वृन्दावनपितृगहनचरौ

कुसुमायुध जननहननशक्तिधरौ।

अरिशूललाञ्छित-करौ

भीतिं मे हरिहरौ हरताम् ॥

'इत्यत्र पूर्वं समासेन समासान्वये वृत्ते योग्यता-ज्ञानेन समसंख्यकपदार्थज्ञानेन वाऽवयवानां वृन्दावनचरत्वादीनां पितृवनचरत्वादीनां च हरिणा हरेण च क्रमिकान्वयबोधः पार्ष्ठिक आर्थः। इत्थं प्राचां नये यथासंख्यं द्विधा। वस्तुतस्तु यथासंख्यस्यालंकारत्वं नोचितम्। लोकसिद्धे क्रमिकाणां क्रमान्वयबोधे कविप्रतिभोल्लिखितत्वस्यालंकारजीवातोरभावात्। इत्थं पण्डितराजस्याभिप्रायः। अस्यमतेऽपक्रमत्वदोषाभाव एव यथासंख्यम्। मम्मटेन समासाभावस्थल एकविध एवायमलंकार उदाहृतः। वस्तुतोऽस्य द्वितीयो भेदोऽसम्भवः। समासस्थले समुदितान्वयबोधमात्रस्य सम्भवेन पार्ष्ठिकक्रमिकान्वय-बोधस्यासम्भवात्। न च' लोमादि-पामादि-पिच्छादिभ्यः शनेलचः' इत्यादिपाणिनिसूत्रेषु पार्ष्ठिको लोमादीनां शादिभिः सहान्वयबोधो दृष्ट इति वाच्यम्। 'यथासंख्यमनुदेशः समानाम्' इति सूत्रबलेन तत्र पार्ष्ठिकान्यवयबोधस्य जायमानत्वेऽपि लोके विनिगमकाभावेन तस्यासम्भवात्। तस्मात् समासे क्रमिकान्वयबोधाभिप्रायेण प्रयुक्ता वृन्दावनपितृगहनचरावित्यादयः शब्दा असाधव एव। एकस्मिन्पद्ये बहूनां पदार्थानां क्रमिकान्वये वैचित्र्यानुभवस्य सिद्धत्वेनास्यालंकारत्वमक्षतम्। यत्रैकस्य द्वयोर्वा पदार्थस्य पदार्थयोर्वा क्रमिकोऽन्वयस्तत्र भवतु नामापक्रमत्वदोषाभावमात्ररूपं यथासंख्यम्। अतएव प्रकाशकृता एकस्त्रिधा वससि चेतसि इत्यादि पद्यमुदाहृतम्, यत्र बहूनां पदार्थानां क्रमिकाणां क्रमान्वयः।

पर्यायः—

काव्यप्रकाशकृता—

'बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत।

अधुना हृदयेऽप्येष मृगशावाक्षि लक्ष्यते॥' इति पद्ये

एकाधेयस्यानेकाधारे भवनरूप आद्यः पर्याय उक्तः। अत्र श्लेषभित्तिकामभेदाध्यवसायविषयस्य रागस्य पुरा बिम्बोष्ठे पश्चाच्च हृदयेऽपि स्थितिरुक्ता। कुवलयानन्दकृताऽप्यत्र विकासपर्याय उक्तः। रसगङ्गाधरकृता कुवलयानन्दकृन्ना-

मागृहीत्वाऽत्र पर्यायालंकारं खण्डयित्वा सारालंकार उक्तः । यतो यत्रैकाधारसम्बन्धनाशोत्तरमपराधार-सम्बन्ध एकस्याधेयस्य वर्ण्यते तत्रायमलंकारः । एक सम्बन्धनाशोत्तरमेवापर-सम्बन्धे सति पर्यायपदप्रयोगो लोकसिद्धः । अत्र पद्ये तु रागस्य पूर्व बिम्बोष्ठरूपाधारसम्बन्धनाशे सति हृदयरूपापराधिरकरणसम्बन्धो न प्रतीयते, किन्तूभयत्र सम्बन्धः प्रतीयते । अतएवापिशब्द उक्तः । अतो बिम्बोष्ठसम्बन्धापेक्षया हृदयसम्बन्धस्योत्कृष्टत्वेन सार एवोचितः । अतएव एकं क्रमेणानेकस्मिन् पर्यायः' इति लक्षणे मम्मटेन क्रमपदमुक्त्वा 'श्रोणीभारस्त्यजति तनुतां सेवते मध्यभागः' इति पद्यमुदाहृतम् । क्रमशब्देन पूर्वाधारसम्बन्धविनाश एवाभिप्रेतः । इत्थं पण्डितराजेन काव्यप्रकाशकारसम्मतोऽपि पर्यायोऽत्र पद्ये खण्डितः । एवंविधे पण्डितराजाशये विचार्यते—काव्यप्रकाशपुस्तकेषु पर्यायालंकारप्रकरणे सर्वत्र 'श्रोणीबन्धस्त्यजति' इत्यादि पद्यं नोपलभ्यते । अतएवेदं पद्यं काव्यप्रदीपे नोक्तम् । अन्यै र्व्याख्यातृभिश्चैवं परित्यक्तम् । अप्पयदीक्षितेन जगन्नाथेन चास्य काव्यप्रकाशे स्थितिरुक्ता । "श्रोणीबन्धस्त्यजति तनुताम्" इत्युदाहरणं तु प्रक्षिप्तमिति बोध्यमिति सुधासागर, उक्तम् । अत्र झलकीकरवामनेन मूल एनत् पद्यं न गृहीतम् 'बिम्बोष्ठ एव' इत्यादिविषयेऽपि पर्याय एव, न तु सारः । भेदप्रतीतावेव सारस्येष्टेः । अत्र तु रागयोः श्लेषेणाभेदः । अयमेव प्राचां सिद्धान्तः । पर्यायपदेन पूर्वसम्बन्धनाशे सति अपरसम्बन्धस्यैव ग्रहणमिति न राजाज्ञा । अपितु पूर्वसम्बन्धसत्त्वेऽपि उत्तरसम्बन्धोऽत्र क्रमेणेति पदेन विवक्षितः । अत्रापि पर्यायः । अतो 'बिम्बोष्ठ एव' इत्यादौ मम्मटस्याप्पयदीक्षितस्य च पर्यायत्वमक्षतम् । अतो नात्र सारो रत्नकराद्युक्तो वा वर्धमानकालंकारः । इत्थं नागेशेन मम्मटादिविचार एव समार्थितः ।[१]

**परिवृत्तिः—**

विनिमयः परिवृत्तिः । स च काल्पनिक एवालंकारपदवाच्यः । परिवृत्तिर्द्विधा-समेन समस्य विनिमयरूपाद्या । इयमेव समपरिवृत्तिर्निगद्यते । यत्र समेनासमस्य विनिमयस्तत्र द्वितीया । इयमपि द्विधा-यत्रोत्तमेन न्यूनस्य विनिमयस्तत्र प्रथमा । यत्र च न्यूनेनोत्तमस्य स तत्र द्वितीया । इत्थं द्वितीयायास्तस्या द्वैविध्यम् । इयमेव विषमपरिवृत्तिर्निगद्यते । इत्थं संकलनया परिवृत्तिस्त्रिधेति मम्मटस्याभिप्रायः । अतएव 'परिवृत्तिर्विनिमयो योऽर्थानां स्यात् समासमैः' इति काव्यप्रकाशसूत्रं व्याच-

---

१. द्रष्टव्य १-गु० म० प्र० ६४५-पृ०

क्षाणेन काव्यप्रदीपकृता "विनिमयो हि केनाचिद्वस्तुना दत्तेन कस्यचिदादानम् । तच्च क्वचित् समेन समस्य । क्वचिदसमेनासमस्य । अन्त्यमपि द्विधा । क्वचिन्यूनेनोत्तमस्य । क्वचिदुत्तमेन न्यूनस्येति त्रिविधेयमित्यर्थः ।" इति व्याहृतम् । वस्तुनोः समत्वमुपादेयत्वमसमत्वं चानुपादेयत्वम् । रसगङ्गाधरकृतः समपरिवृत्तेरपि द्वैविध्यमामनन्ति । उत्तमेनोत्तमस्य विनिमये प्रथमा समपरिवृत्तिः । न्यूनेन न्यूनस्य विनिमये परा सा । इत्थं परिवृत्तिश्चतुर्धा । एतदलंकारभेदविषय एव मम्मटपण्डितराजयोर्वैमत्यम् । पण्डितराजस्य मतं सम्यगाभाति ।

**परिसंख्या :—**

स्वसदृशव्यवच्छेद-पर्यवसायि मानान्तरावगत-शब्दतः-प्रतिपादिवस्तु परिसंख्या । वर्जनबुद्धिरिति परिसंख्या पदार्थः । परि-संख्याशब्दयोर्वजर्नबुद्धिपरत्वात् । परेः 'प्ररिर्वर्जने' इति पाणिनि सूत्रे वर्जनार्थे, संख्याशब्दस्य च "यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते" इति गीताश्लोके बुद्धौ वृत्ति दृष्टा । परिसंख्या चतुर्धा-प्रश्नपूर्विका शाब्दी, शुद्धा शाब्दी, प्रश्नपूर्विकाऽऽर्थी शुद्धार्थी च । व्यपोह्यमानस्य वाच्यत्वं प्रतीयमानत्वं चादाय परिसंख्यायां शाब्दार्थत्वयोर्व्यवस्था । एते भेदा काव्यप्रकाशस्याभिमताः । उदाहृताश्च तत्र । मम्मटमतमनुसरता पण्डितराजेन सामान्यतः प्राप्तस्यार्थस्य कस्माच्चिद्विशेषाद्व्यावृत्तिः परिसंख्या" इति लक्षयित्वा-चत्वारो भेदा उदाहृताः;एतद्भेदविषये तदुदाहरणविषये च विदुषां वैमत्यं दर्शितम् । तथाहि व्यपोह्यमानस्यार्थत्व एव परिसङ्ख्याया अलंकारत्वम् । न तु वाच्यत्वे । यथा हेतुत्वस्यार्थत्व एव हेतोरलंकारता । इत्यन्येषां मतम् । व्यपोह्यमानस्यार्थत्वेऽपि परिसंख्याया नात्लंकारत्वम् । अपितु कवि-प्रतिभानिर्मितस्यैव तस्यार्थत्वे तस्यास्तत्त्वम् । अन्यथा 'पञ्चपञ्चनखा भक्ष्याः' इत्यादावपि तत्वापत्तिः । काव्यप्रकाशोदाहृत-"किं भूषणं सुदृढमत्र यशो न रत्नम्" इत्यादिपद्यसदृशपद्येषु दृढारोपरूपकमेव । अन्यथा 'न विषं विषमित्याहु र्ब्रह्मस्वंव विषमुच्यते' इत्यादावपि तन्न स्यात् । 'कि भूषणम्' इत्यादौ रत्नादिव्यपोहस्यार्थत्वाभावेनापि न परिसंख्या । इत्यन्येषां मतम् । इदमेव पण्डितराजस्याभाति । इत्थं पण्डितराजमते कल्पितवस्तु-व्यावृत्तेरार्थत्व एवालंकारत्वं परिसंख्यायाः । इत्थं "किमासेव्यं पुसां सविधमनवद्यं द्युसरितः" इत्यादौ काव्यप्रकाशस्य पद्ये स्थितायाः परिसंख्याया नालंकारत्वम् । अन्यसेव्यवस्तुव्यपोहस्य शास्त्र-सम्मतत्त्वेन वास्तवात् । तस्मात्—

"कौटिल्यं कचनिचये करचरणाधर-दलेषु रागस्ते ।
काठिन्यं कुचयुगले तरलत्वं नयनयो र्वसति ॥"

एवंविधे पद्ये परिसंख्याऽलंकारः । अत्र कौटिल्यं वक्रता कपटं च, रागो रक्तिमा प्रीतिश्च, काठिन्यं दृढ़ता निर्दयता च, तरलत्वं चपलताऽविचार्यकारित्वं च । अनयोरर्थयोः श्लेषभित्तिकाभेदाऽध्यवसायः । व्यपोह्यमानानां हृदयादिनिष्ठानां कौटिल्यादीनां काल्पनिकरूपत्वेनात्रालंकारत्वम् । एवंविधा एव श्लोकाः परिसंख्यालंकारस्य विषयाः । "भक्ति र्भवे न विभवे" इत्यादावपि नालंकारत्वम् । व्यपोहस्य वाच्यत्वाद् वास्तवाच्च । वस्तुतो व्यपोहस्य वास्तविकत्वे वाच्यत्वेऽपि च वैचित्र्यस्यानुभवात् परिसंख्याया अलंकारत्वं युक्तम् ।

**अर्थापत्तिः—**

केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्यापत्तिरूपा चतुर्विंशतिभेदाऽर्थापत्तिः पण्डितराजेनोक्ता । अर्थान्तरस्य कविकल्पितत्व एवालंकारत्वमर्थापत्तेः, न तु वस्तुत्वे । अस्या मीमांसकाभिमतार्थापत्तौ नान्तर्भावः । तत्रापतदर्थान्तरं रात्रिभोजनादिरूपमन्तराऽऽपादकस्य देवदत्त-पीनत्वादेरर्थस्यानुपपन्नत्वात्, अत्र चाऽऽपाद्यमर्थान्तरमन्तराऽऽपादकस्यार्थस्य सूपपन्नत्वाच्च । तस्य सूपपन्नत्वे ह्यापाद्यस्य कल्पना-प्रसूतत्त्वं बीजम् । नाप्यनुमानेऽन्तर्भावः । आपाद्यापादकयोः समानाधिकरणत्वाऽभावेन व्याप्यत्वपक्षधर्मत्वयोरभावात् । येन कारणेनैकार्थसिद्धिस्तेनैव कारणेनापरार्थानुमानमर्थापत्तिरित्यपि वक्तुं न शक्यम् । अर्थान्तरधियोऽनुमितिधियश्च भिन्नत्वात् । तथाहि 'अयमर्थ एवं भवितुमर्हति' इत्याद्यार्थापत्तिधिय आकारः । 'अयमर्थः एवं भवत्येव' इत्यनुमितिधियः सः । अर्थापत्तेरतिशयोक्तावप्यप्रवेशः । तादृशातिशयोक्तेर्विपरीतार्थ एव विश्रान्तेरस्याश्चापादकस्य सिद्धत्वेनाऽऽपाद्यस्य च काल्पनिकत्वेन यथाश्रुतएव विश्रमात् । तथाहि—

"राकायामकलङ्कं चेदमृतांशोर्भवेद् वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥"

इति यद्यर्थातिशयोक्तौ "राकायां चन्द्रस्याकलङ्कवपुर्न भवति, अतएव तदानुगुण्येन मुखं साम्यपराभवं नाप्नोति" इत्यत्र पद्योक्तविपरीतार्थ एव विश्रान्तिः । कवेस्तत्रैव तात्पर्यात् ।

'यदि ते चरणाम्बुजं हृदा वहतो मे न हतो विपद्गणः ।
अथ चण्डकरेण मण्डिते दिनमध्येऽपि जितं तमोगणैः ॥'

इत्यत्रत्यार्थापत्तौ यदि त्वत्पादपद्मध्यानपरस्य मे विपदां न नाशः, तदा सूर्यसमन्वित एव दिने तमोगणकर्तृको जयः सम्भाव्यते इति पद्योक्तार्थ एव विश्रान्तिः । कवेतत्रैव तात्पर्यात् । रसगङ्गाधर इत्थं व्यवस्थापितमर्थापत्तेलङ्कारत्वम् ।

काव्यप्रकाशे ह्ययमलंकृतिर्नोपलभ्यते । तदनुपलम्भ इदं बीजम्-'यदि ते' इत्यादौ यद्यार्थातिशय्योक्तिरेव । तस्या द्वैविध्यम्-यत्र यथाश्रुतेऽर्थे विश्रान्तिस्तत्राद्यो भेदः । यत्र विपरीतार्थे सा तत्रापर इति मम्मटतात्पर्यम् । यत्र यदिपदानुक्तावर्थापत्तिरभिप्रेता तस्य अनुमाने प्रवेशः । यथा—

'स जितस्त्वन्मुखेनेन्दुःका वार्ता सरसीरुहाम्' इत्यादौ, "लीलालुण्ठित शारदापुरधियाम्" इत्यादौ चानुमानमेवालंकारः, नत्वर्थापत्तिः । अनुमानालंकृतौ साध्यसाधनयोर्व्याप्तिः कल्पना-प्रसूतैव, न तु वास्तविकीति प्रागावेदितम् । अन्यथाऽनुमानस्यालंकृतित्वं न स्यात् । एतेनानुमानादर्थापत्ते र्भेदको व्याप्यत्व-पक्षधर्मत्वाभावो हेतु र्निरस्तः । इत्थं प्रदीपोद्योत-गुरुमर्मप्रकाश-कृतां नागेशभट्टानामाशयः ।आर्थापत्त्यनुमितिधियो वैंलक्षण्यमात्रकृतोऽनुमानादर्थापत्तेर्विशेषोऽप्यरुचिर एवेति तेषामाशयः प्रतीयते ।

विकल्पः—.

रसगङ्गाधरे विरुद्धयोः पाक्षिकप्राप्तिरूपो विकल्पालंकार उक्तः । विकल्प्यमानयोरौपम्यं गम्यमलंकारताबीजम् । तदभावे नालंकारत्वम् । यथा 'जीवनं मरणं वास्तु नैव धर्मं त्यजाम्यहम्' इत्यत्रत्यविकल्पस्य नालंकारत्वम् । अलंकारता-प्रयोजकस्य गम्यमानौपम्यस्यात्र जीवन-मरणयो-रभावात् । अस्यालंकारस्येदमुदाहरणम्—

'प्राणानर्पय सीतां वा गृध्रांस्तर्पय वा द्विजान् ।
यमं भजस्व रामं वा यथेच्छसि तथा कुरु ॥'

इहार्पण-तर्पण भजन-कर्मत्व-रूपेण साधारणधर्मेण प्राणसीतयोर्गृद्ध्रद्विजयोर्यम-रामयोश्चौपम्यं गम्यम् । मानरक्षा-प्रमाणेनार्पणतर्पणभजनेषु कर्मतया प्राणगृध्रयमानां जीवनरक्षाप्रमाणेन सीता-द्विजरामाणां प्राप्तानां यौगपद्येन प्राप्त्यसम्भवात् पर्यायेण कर्मतया तेषु प्राप्तिः ।

काव्य-प्रकाशेऽयमलंकारो नोपलभ्यते । तद्बीजमुद्योते लिखितम् । शब्दार्थ-द्वारा वर्णनीयोपकारकत्वमेवालंकारत्वम् । न हि विकल्पेन वर्णनीयस्योपकारः । अतो नास्यालंकारत्वम् । अन्ये त्वत्रापि संदेहमेवाहुः । निश्चयोऽत्र व्यङ्ग्यः । यथा 'मात्सर्यमुत्सार्य' इत्यादौभर्तृहरिपद्ये निश्चयस्य व्यङ्ग्यत्वम् । ससंदेहालंकृतावपि सादृश्योत्थापकत्वमङ्गीकृतमेव ।

**समुच्चयः—**

पदार्थानां युगपदन्वयरूपस्यास्यालंकारस्य विषये मम्मटपण्डितराजयो र्न विवादः । अस्य भेदकरण ईषत्प्रकारभेद इति त्वन्यत् । प्रस्तुतस्य कार्यस्य सत्येक-स्मिन् साधके यत्र साधकान्तराणां तस्य साधने खलेकपोतिकान्यायेनाहमहमिकया प्रवृत्ति स्तत्रायमलंकार इति मम्मटकृतसमुच्चयलक्षणस्य सारांशः । एवं रसगङ्गा-धरेऽपि प्रोक्तम् ।

**समाधिः—**

'समाधिः सुकरं कार्यं कारणान्तरयोगतः' इति मम्मटः । 'एककारणजन्यस्य कार्यस्याकस्मिक-कारणान्तर-समवधानाहित-सौकर्यं समाधिः' इति जगन्नाथोक्ति र्मम्मटमतानुसारिणीति स्पष्टम् । एवमुभमयमते साम्यमेव । रसगङ्गाधरकृता कार्यस्याऽनायासेन सिद्ध्या साङ्गसिद्ध्या च सौकर्यं द्विधोक्तम् । इदमेव वैशि-ष्ट्यम् ।

**प्रत्यनीकम् :—**

प्रतिपक्षोत्कर्षकफलकः साक्षात् तत्प्रतीकारासमर्थयत्किञ्चित्पदार्थकृतस्तत्स-म्बन्धितिरस्कारः प्रत्यनीकम् । यथा—

**"त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता ।**
**पञ्चभि र्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः ॥"**

अथवा :—

**'यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः ।**
**कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते ॥'**

प्रथमे पद्ये कामिन्याः कमिनश्च स्वस्वामिभावः सम्बन्धः ।स्वजेतुः कामिनः साक्षादपकर्तुमशक्तेन कामेन तस्य सम्बन्धिन्याः कामिन्याः कृतः पीडारूपस्तिस्कारो

वर्णनीयकामिन उत्कर्षकृत् । द्वितीये पद्ये वर्णनीयसम्बन्धि-सम्बन्धिनस्तिरस्कारः । तथाहि वर्णनीयो भगवान् कृष्णः । तस्य सम्बन्धि कान्तं मुखम् । अनयोरवयवावयविभावः सम्बन्धः । तस्य च सम्बन्धी चन्द्रः । मुखचन्द्रयोरुपमानोपमेयभावः सम्बन्धः । स्ववैरिणः कृष्णस्य साक्षात् प्रतिकर्तुमशक्तेन राहुणा तत्सम्बन्धि-सम्बन्धिनो बाधनाद् वर्णनीय श्रीकृष्णस्यमुखेन्दोरप्युत्कर्षः ।

अयं प्रत्यनीकालंकारो मम्मटेन लक्षित उदाहृतश्च । पण्डित-राजा एनं हेतूत्प्रेक्षायां प्रवेशयन्ति । पूर्वपद्ये "अनुशयादिव तापयति" इति कण्ठत उक्तम् । इव शब्दोऽत्र सम्भावनाद्योतकः द्वितीयपद्ये "भगवद्-वैरानुबन्धादिव भगवद्-वक्त्रसदृश इन्दुर्बाध्यते" इति प्रतीतेः स्फुटमेव हेतोरुत्प्रेक्ष्यमाणत्वम् । न च सम्भावना द्योतकेवादिविरहादत्र कथमुत्प्रेक्षा सेति वाच्यम् । तस्या गम्यमानायाः स्वीकारे बाधाभावात् । नहि तस्याः प्रतीयमानत्वे इवादीनां सत्ता । न च प्रत्यनीके हेतोर्निश्चीयमानत्वं तत्र च सम्भाव्यमानत्वमिति भेद इति वाच्यम् । गम्य-मानाया हेतूत्प्रेक्षाया अनुत्प्रेक्षात्वापत्तेः । तत्रापि सम्भावनाद्योतकेवादिपदप्रयोगाभावेन हेतोर्निश्चीयमानताया अनुभवसिद्धत्वात् । न च प्रतिपक्षगत-बलवत्त्वस्य तत्सम्बन्धितिस्कारकगत-निर्बलत्वस्य च प्रतीतेर्हेतूत्प्रेक्षातोऽस्य वैलक्षण्यमिति वाच्यम् । एतावन्मात्रवैलक्षण्य हेतोः सत्त्वेऽपि हेतूत्प्रेक्षातः प्रत्यनीकस्य पृथग्भावेऽनौचित्यात् । नहि पृथिव्यवान्तरभेदाद् घटाद् भिन्नोऽपि घटः पृथिव्या बर्हिर्भवति ।

नागेशभट्टा स्तदनुसारिणोऽलंकार-चन्द्रिकाकाराश्च प्रत्यनीकस्य पृथगलंकारत्वं स्वीकुर्वन्ति । तस्य बीजं च 'तदपकारासमर्थस्तदीयं पीडयति' इति प्रतीत्यैव चमत्कारः । न तु हेतुसम्भावनाकृतः । वैचित्र्यवैलक्षण्यजनकत्वमलंकारभेदनिमित्तम् । अलंकारचन्द्रिकाकारेण "एवं च हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलङ्कारान्तरं भवितुमर्हति इति कस्यचिद् वचनमनादेयम्" इति प्रोक्तम् । नागेशेन गुरूमर्मप्रकाश उद्योते चैवमेव समर्थितम् ।

**प्रतीपम् :—**

तिरस्कार-फलकोपमानापकर्षबोधानुकूलो व्यापारः प्रतीपम् । तच्च चतुर्धा । उपमानस्याक्षेपः प्रथमम् । उपमानस्यो-पमा-निष्पत्तिद्वारोपमेयत्वकल्पनं द्वितीयम् । उपमानिष्पत्तिद्वारोपमानस्योपमेयत्व कल्पनं तृतीयम् । असामान्य गुणयोगादननुभूतोपमानभावस्य पदार्थस्योपमानत्वकल्पनं चतुर्थम् । इत्थं मम्मटमते चतुर्विधः प्रतीपालंकारः । पण्डितराजमते प्रतीपस्य न पृथगलंकारत्वम् । उपमादावेवान्तर्भावात् ।

तथाहि-प्रथमं प्रतीपं केषांचिन्मत आक्षेप एव। द्वितीयमनुक्तवैधर्म्यो व्यतिरेकः। तृतीय-चतुर्थ-योरुपमायामन्तर्भावः। यतः सुन्दरं सादृश्यमुपमा। "मुखमिव कमलम्" इत्यादौ सादृश्यस्यानिष्पत्तिरसौन्दर्यं वास्ति, येनोपमातोऽनयोर्बहिर्भाव इति-कथनमसङ्गतम्। मम्मटेनापि उपमेये मुख आधिक्यरूपसौन्दर्यविशेषस्य स्वीकारात्। विशेषस्य सामान्यानिवारकत्वात्। प्रसिद्ध-कमलादि-प्रतियोगिकमेव सादृश्यम्, न मुखादि-प्रतियोगिकमिति तु राजाज्ञामात्रम्। भवतु नाम प्रतीयमान उपमानतिरस्कार उपमान्तरवैलक्षण्यप्रयोजकः। उपमानुस्यूतस्यैव तत्तिरस्कारस्य प्रतीतेः। नहि माधुर्यातिशयेन पार्थिवान्तरपदार्थाद् भिन्नाऽपि द्राक्षा पृथिव्याः पृथग् भवति। तिरस्कारस्य पृथगलंकारता-प्रयोजकत्वे तत्पुरस्कारोऽपि पृथग् भवति। तिरस्कारस्य पृथगलंकारता-प्रयोजकत्वे तत्पुरस्कारोऽपि तत्प्रयोजकः स्यात्। ततोऽलङ्कारान्तरापत्तिः स्यात्। अथवा प्रतीपभेदान्तरापत्तिः स्यात्। किञ्चैषां प्रतीप-प्रभेदत्वमनुपपन्नम्। प्रतीपसामान्य-लक्षणस्याकरणात्। 'उपमाद्यन्यतमत्वं प्रतीपत्वम्' इति सामान्यलक्षणे स्वीकृते उपमादीनां समेषां प्रतीपप्रभेदत्वापत्तिः। उपमालक्षणं तु सकलसाधारणम्। प्रथमं प्रतीपं येषां मते नाक्षेपस्तन्मते भवतु नाम पृथगलङ्कार इति पण्डितराजस्याभिप्रायः।

अत्र विचार्यते-प्रथम प्रतीपस्यालंकारत्वं रसगङ्गाधरकृता न खण्डितम्। अर्थात्तस्य पृथगलंकारता स्वीकृता। द्वितीयस्य व्यतिरेकेऽन्तर्भावोऽनुचितः। व्यतिरेक उपमाया निष्पत्तावपि, उपमेय उपमानाधिक्यस्य प्रतीतेः। अत्र तु नोपमायाः प्रतिष्ठानम्। तस्मादुपमानिष्पत्तौ यत्रोपमेय उपमानाधिक्यप्रतीतिः स व्यतिरेकस्य विषयः। अत्र तु तदनिष्पत्तौ तिरस्कारस्य प्रत्ययः।[१] मुखाधिक्यस्य व्यङ्ग्यत्वञ्च। तृतीय-चतुर्थयोरपि नोपमायामन्तर्भावः। अनयोरूपमानतिरस्कार-प्रतीते-रेव चमत्कारित्वात्। सादृश्यप्रत्ययकृतचमत्काराभावाच्च। प्रतीपपदनिष्ठ-योगशक्त्यैव सामान्य लक्षणलाभात् पृथङ् न लक्षितं मम्मटेनेति जाने। अतएव तेन "उपमेयस्योपमानप्रतिकूलवर्तित्वादुभयं प्रतीपम्" इति निगदितम्। नागेशेनास्य पृथग्लक्षणमुक्तम्। तेन खण्डितं पण्डितराज-प्रत्तसामान्य-लक्षणाभाव-प्रयुक्त-दूषणम्।[२]

---

१. अतएव व्यतिरेकाद्भेदः, तत्रोपमा-निष्पत्तावपि, उपमेयाधिक्यप्रतीतेः। अत्र वर्ण्य मुखस्याधिक्यं व्यङ्ग्यम्॥ —का० प्र० वा० टी० ७३६ पृ०।

२. चिन्त्यमिदम्। तिरस्कार-फलकोपमानापकर्षबोधानुकूल-व्यापारस्य प्रतीप-सामान्य-लक्षणत्वसम्भवात्। स च वाच्यो व्यङ्ग्यो वेत्यन्यत्।' —गु० म० प्र० ६७१ पृ०

"उपमानतिरस्कारस्यालंकारताबीजत्वात्" इति वदता काव्यप्रदीपकारेणापि तिरस्कारोऽस्यालंकारस्य बीजमङ्गीकृतम्। अतो मम्मटमते प्रतीपस्य पृथगलंकारताऽविरुद्धा।

**प्रौढोक्तिः—**

कस्मिंश्चिदर्थे किञ्चिद्धर्म-कृतातिशय-प्रतिपिपादयिषाहेतुक-प्रसिद्ध-तद्धर्मवता संसर्गस्योद्भावनरूपा प्रौढोक्तिः पृथगलङ्कार इति पण्डितराजस्य मतम्। यथा—

**वल्मीकोदरसम्भूतकपिकच्छूसहोदराः।**
**हा पीडयित्वा निघ्नन्ति सज्जनान् दुष्टदृष्टयः॥'**

अत्र कपिकच्छू-(वृश्चिकः 'कौ' इति भाषायां प्रसिद्धौषधिविशेषो वा) सहोदरत्वपात्रेण दुर्जनेषु दुःखदातृत्वमात्रं प्रतीयते। यदा कपिकच्छ्वा वल्मीकोदरसम्भूतत्वरूपं विशेषणं प्रत्तं तदा दुर्जनेषु तत्सहोदरत्वेन पीडादानपूर्वकमारकत्व रूपातिशयस्य प्रतीतिः। यतोहि सर्पाधारस्य वल्मीकस्य संसर्गेण कपिकच्छ्वां सर्पाधिकरणवृत्तितारूपो मारकतावच्छेदको धर्मः कविना कल्पितः। कपिकच्छूसहोदरत्वेन च दुर्जनेषु मारकतावच्छेदेकस्यापि प्रतीतिः।

अत्र विचार्यते-किमस्याः पृथगलंकारता न्याय्या? वस्तुतोऽस्या असम्बन्धे सम्बन्धरूपातिशयोक्तावन्तर्भावः समीचीनः। पूर्वोक्तपद्ये कपिकच्छू-विशेषणे सर्पाधिकरण-वृत्तितारूपे वल्मीकोदरसम्भूतत्वे मारकतावच्छेदकत्वस्याऽसम्बन्धे अपि तत्सम्बन्धकल्पनात्। अतएव प्रकाशकृता प्रौढोक्तिः पृथगलंकारतया न लक्षिता।

**ललितम्:—**

प्रकृतधर्मिणि प्रकृतव्यवहारानुल्लेखेन निरूप्यमाणाप्रकृतव्यवहारसम्बन्धस्य ललितालंकारस्यार्थ्यां निदर्शनायामन्तर्भावो बहुभिर्युक्तिभिः रसङ्गाधरे प्रदर्शितः। ता युक्तयो विस्तरभिया नोल्लिख्यन्ते। इत्थं पण्डितराजस्यापि मते ललितस्य न पृथगलंकारता।

**प्रहर्षणम्:—**

साक्षात्तदुद्देश्यकयत्नं विनापि स्वाभीष्टार्थ-लाभस्य प्रहर्षणालंकारस्य त्रयोभेदाः। आकस्मिकाभीष्टार्थलाभः प्रथमः। अभिप्रेतार्थसाधनाय यत्ने विधीयमाने

ततोऽप्यधिकस्य लाभो द्वितीयः। उपायसिद्ध्यर्थाद्यत्नात् साक्षात् फलस्य लाभस्तृतीयः। इत्थं त्रिविधोऽयमलंकारः पण्डितराजेन स्वीकृतः। काव्यप्रकाशकारमते त्वस्य समाधावन्तर्भावः। 'समाधिः सुकरं कार्यं कारणान्तरयोगतः" इति समाधिलक्षणे "कारणान्तरयोगतः" इति पदमाकस्मिकाभीष्टलाभस्य स्वेष्टाधिकसिद्धेरुपायसिद्ध्यर्थयत्नात् साक्षात् फललाभस्य चापि, उपलक्षणम्। कार्यसौकर्यस्य प्रहर्षणेऽप्यनुस्यूतत्वमनुभवसिद्धम्। अतः सामान्य-धर्मा-क्रान्तत्वात् समाधिभेदा एव प्रहर्षण-भेदा इति मम्मटमतसमर्थकानामुद्योतकारादीनामभिप्रायः। अयमुद्योते समाध्यलंकार-प्रकरणे द्रष्टव्यः।

**विषादनम्:—**

इष्यमाणविरुद्धार्थलाभो विषादनम्। यत्रेष्यमाणलाभार्थं कारणप्रयोगो न विधीयते, किन्तु स्वेष्टलाभार्थमिच्छैव क्रियते सोऽस्यालंकारस्य विषयः। यत्र तु कारण-प्रयोगेण विरुद्धार्थस्योत्पत्तेरुत्पाद्योत्पादकभावसम्बन्धोऽननुरूपः स विषमस्य विषयः। न चेष्टलाभार्थ-प्रयुक्तात् कारणात् विरुद्धार्थलाभो यत्र विद्यते तत्रोत्पाद्योत्पादकभावरूपसम्बन्धस्याननुरूपत्वेन विषमम्, इष्यमाण-विरुद्धलाभाच्च विषादनमिति विषम-विषादनयोः सांकर्येण विषादनस्य विषमभेदगतार्थतेति वाच्यम्। विषादनविषयस्य विषमानालिङ्गितस्यापि सम्भवात्। यथा—

"चेलाञ्चलेनाननशीतरश्मिं, संवृण्वतीनां हरिदृश्वरीणाम्।
गोपाङ्गनानां स्मरजातकम्पादकाण्डसम्पातमियाय नीवी'॥"

अत्र हेतुभूतलज्जा-संधान-प्रतिपक्षतयाऽभीष्टाननगोपनस्य विरोधि नीवीस्खलनम्। तत्कारणं च सात्विककम्परूपम्। न तु गोपनानुकूलयत्नरूपम्। नह्यत्रेष्टकारणत्वेन प्रयुक्तात् साधनादिष्टानुत्पत्तिरस्ति। चेलाञ्चलावरणेन मुखाच्छादनस्यैवेष्टेः। अतो नात्रविषमगन्धोऽपि। इति रसगङ्गाधरकृदाशयः। काव्यप्रकाशेऽस्यालंकारस्य पृथक् चर्चा नास्ति। काव्य प्रकाशकृन्मतेऽस्य विषमालंकार एवान्तर्भावः। स नागेशेनोद्योत उक्तः, खण्डिता चास्य पृथगलंकारता।[1]

---

१. एवमिष्यमाणविरुद्धार्थप्राप्तिरपि विषममेव, तादृशेच्छया तादृशार्थलाभयोगस्य विषम त्वात्। एतेनेदृशस्थले विषादननामालंकार इत्यपास्तम्। —प्र० उ०, विषमप्रकरणम्।

**उल्लासः—**

अन्यदीयगुणदोष-प्रयुक्तान्यगुणदोषाधानलक्षणोऽयमलंकारश्चतुर्धा। अन्यदीयगुणेनान्य-दीय गुणाधानलक्षण: प्रथम: प्रकार:, अन्य गुणेनान्यदोषाधान-स्वरूपो द्वितीय:। अन्यदीयदोषेण अन्यदीयगुणाधानरूपस्तृतीय:। तद्दोषेण तस्य दोषाधानरूपश्चतुर्थ:। अयमलंकारो रसगङ्गाधरे निरूपित:। अस्य पृथगलंकार-भावेऽलंकारत्वाभावे च मतं प्रदर्शितम्। केषाचिन्नयेऽस्य काव्यलिंगेऽन्तर्भाव:। केषाञ्चिन्मते चास्य लौकिकमयत्वेनालंकारत्वाभाव:। प्रदीपोद्योतकार-नागेशमते प्रथम-तृतीययो: द्वितीय-चतुर्थयोश्चोल्लास-प्रभेदयो: क्रमश: समे विषमे वान्त-र्भाव:। एतदलंकार प्रभेदेषु, अनुरूपाननुरूपसंसर्गप्रतीतेरेव चमत्कारित्वात्। अत-एव काव्यप्रकाशे पृथङ्न लक्षित:।

**अवज्ञा :—**

उल्लासविपर्ययरूपावज्ञापि चतुर्धा। अन्यदीयगुणदोष-प्रयुक्तान्यदीयगुण-दोषा-धानाभाव इति यावत्। तस्याश्चत्वारोभेदा यथा अन्य-गुणप्रयुक्तान्यगुणा-धानाभाव: प्रथम:। अन्यदीयगुणप्रयुक्तान्यदीयदोषाधानभावो द्वितीय:। अन्यदोष-प्रयुक्तान्यदीयदोषाधानाभाव स्तृतीय:। अन्य-दोष-प्रयुक्तान्यदीयगुणा-धनाभावश्चतुर्थ:। चतुर्विधस्यास्यावज्ञाभिधानस्यालंकारस्य विशेषोक्तावन्त-र्भाव:। रसगङ्गाधरकृतापीत्थमुक्तम्। नागेशेनाऽपि तथा। अतएव काव्यप्रकाशेऽयमलंकारो न लक्षित:।

**अनुज्ञा :—**

दोषत्वेन ख्यातस्यापि वस्तुन उत्कटगुणविशेषलालसाहेतुकप्रार्थनरूपाया अनुज्ञाया रसगङ्गाधरोक्ताया विशेषालंकारेऽन्तर्भाव:। काव्यप्रकाशे 'विशेषस्त्रि-विध: स्मृत:' इत्युक्त्या विशेषस्य त्रिविधिवत्बोधनमुपलक्षणम्। तेन 'विपद: सन्तु न: शश्वद् यत्र संकीर्त्यते हरि:' इत्यत्र नानुज्ञालंकार:। किन्तु विशेष-विशेष इति नागेश: प्रदीपोद्योते स्वाभिप्रायं शब्दान्तरै: प्रकाशितवान्। वस्तुतो विशेषेऽस्या अन्तर्भावोऽनुचित:। बीजाभावात्।. नहि, अनुज्ञा विशेषालंकारसामान्यलक्षणा-क्रान्ता, येन तस्यास्तत्रान्तर्भाव: स्यात्। उपमाया इव विशेषस्य सामान्य-लक्षणं मम्मटेन नाभिहितम्। तस्माद् रसगङ्गाधरोक्ताया अस्या: पृथगलंकारता रमणीया।

**तिरस्कारः—**

दोषविशेषानुबन्धेन गुणत्वेन स्यातस्यापि वस्तुनः तिरस्कार इति लक्षणस्यालंकारस्य मम्मट मते न पृथगलंकारता ।

**लेश :—**

रसगङ्गाधरकृत्सम्मतस्याऽभीष्टसाधनताहेतुकं गुणस्य दोषत्वेन, इष्टसाधनताहेतुकं दोषस्य गुणत्वेन च वर्णनं लेशः इति द्विविधस्य लेशस्य विशेषालंकारभेदविशेषत्वम् । तथा चोक्तं नागेशेन प्रदीपोद्योते—

'एवं किञ्चित् सौकर्यं दृष्ट्वा दोषस्य गुणत्त्व-कल्पनम् गुणस्य दोषत्वकल्पनमपि सः । यथा—

"नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम् ।
शाखिनोऽन्ये विराजन्ते खण्ड्यन्ते चन्दनद्रुमाः ।।"

एतेनेदृशे विषये लेशनामा पृथगलंकार इत्यपास्तम् ।वस्तुतोविशेष-विशेषत्वमस्यापि, अनुज्ञावदनुचितम् । विशेषसामान्यलक्षणानाक्रान्तत्वात् ।

**तद्गुण :—**

स्वगुण-त्यागपूर्वकं स्वसन्निहितवस्त्वन्तर-सम्बन्धिगुणग्रहणं तद्गुण इति रसगङ्गाधरकारः ।

'स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत् ।
वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ।।'

इति काव्यप्रकाशकारः । एवमेतदलंकारस्योभयत्र स्वीकारः ।

**अतद्गुण :—**

तद्गुणविपर्ययोऽतद्गुणः । काव्यप्रकाश उक्तम्—

'तद्रूपाननुहारश्चेदस्य तत्स्यादतद्गुणः ।।' इति ।

अयमलंकारः काव्य प्रकाशे स्वीकृतः । पण्डितराजेन चाऽयं पृथगलंकारो न स्वीकृत इति प्रतीयते । 'अन्ये तु' इत्यादिना विशेषोक्तावन्तर्भावात् । अत्रापि गुणग्रहणहेतोरुत्कृष्टगुणवस्तुसन्निधानसत्त्वेऽपि तद्गुण-ग्रहणाभावमात्रम् । सन्निधानेऽपीत्यपिना विरोधोऽपि विवक्षित एव । अन्यथा जीवातोरभावेनालंकारता न

स्यात्। विरोधस्य च कार्यकारण-भावाविवक्षणेऽसम्भवः। अस्मिन्नलंकारे कार्य-कारणभावो न विवक्षितः, किन्तु सन्निहितस्य गुणग्रहणाभाव इति मत्वा काव्य प्रकाशकृता पृथग् लक्षित इति प्रतीयते। अयमाशयश्च रसगङ्गाधरकृता खण्डित इति प्रागभिहितम्।

मीलितम्:—

समेन स्वाभाविकेनागन्तुना वा हेतुना वस्तु-स्वरूप तिरोधानं मीलितालंकार इति काव्यप्रकाशोक्तमीलिताऽलंकारलक्षणस्याभिप्रायः। 'स्फुटमुपलभ्यमानस्य कस्यचिद् वस्तुनो लिङ्गैरतिसाम्यात्तद्-भिन्नत्वेनागृह्यमाणानां वस्त्वन्तरलिङ्गानां स्वकारणाननुमापकत्वं मीलितम्' इति रसगङ्गाधरकृत्। अयमलंकार उभयत्र स्वीकृतः।

सामान्यम्:—

प्रत्यक्षविषयस्यापि वस्तुनो बलवत्सजातीयग्रहणकृतं तद्भिन्नत्वेनाग्रहणं सामान्यम्। मीलिते तु निगृह्यमाणवस्तु न प्रत्यक्षविषयः, इति न तत्रातिव्याप्तिरिति पण्डितराजः।

'प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया।

ऐकात्म्यं बध्यते योगात्तत् सामान्यमिति स्मृतम्॥'

इति मम्मटः। एतदलंकारलक्षणविषये साम्यमेव। किन्तूदाहरणविषये मम्मट-पण्डितराजयोर्विवादः। यत्रान्यवस्तुसम्बन्धेन गुणसाम्यविवक्षया प्रकृताप्र-कृतयोरैकात्म्यं निबद्धम् पुनश्च केनचिद् हेतूना तद्विघट्यते तत्रापि सामान्यमेवालं-कारः। प्रथमोत्पन्नाया ऐकात्म्यप्रतीतेः पश्चाज्जातया तदभावप्रतिपत्याऽबाधा-भावात्। प्रथमप्रतीतेः पश्चात् प्रतिपत्त्याऽनिरास इति यावत्। यथा—

'वेत्रत्वचा तुल्यरुचां बधूनां

कर्णाग्रतो गण्डतलागतानि।

भृङ्गाः सहेलं यदि नापतिष्यन्

कोऽवेदयिष्यन्नव चम्पकानि॥'

इति पद्ये गण्ड-चम्पकयोरैकात्म्यं कविना निबद्धम्। पश्चाच्च भृङ्गयोगे- विघटितम्। गण्ड-चम्पकयोरैकात्म्यप्रतीतेः भृङ्गयोगकृततदभावप्रतिपत्त्या न व्युदासः। प्रथमप्रतीत्याः पाश्चात्यप्रतीत्या व्युदसितुमसम्भवात्। उक्तं मम्मटेन—

'अत्र निमित्तान्तरजनितापि नानात्व-प्रतीतिः प्रथम प्रतिपन्नमभेदं न व्युदसितु-मुत्सहते। प्रतीतत्वात्तस्य प्रतीतेश्च बाधायोगात्॥' इति।

उत्तर-प्रतीत्या पूर्वप्रतीत्यास्तिरस्कृतत्वात् चमत्कारित्वाभावेन नात्र सामान्य-स्यालंकृतित्वम्। अपितु, उत्तरप्रतीत्यैव व्यपदेशो युक्तः। अन्यथा व्यतिरेकेऽप्युप-मापत्तिः स्यात्। पूर्वं सादृश्य-प्रतीत्या पश्चाद् व्यतिरेकस्य ज्ञानात्। यदि प्राच्य प्रतीतेः पाश्चात्यप्रतिपत्त्या बाधो न स्वीक्रियेत तदा प्राक्कालिकसादृश्य-प्रतीत्या व्यतिरेकेऽपि व्यपेदशः स्यात्। न तु भेदप्रतीत्या पाश्चात्ययेति यावत्। इति पण्डितराजस्याभिप्रायः सम्यगेव।

उत्तरम्:—

प्रश्न-प्रतिबन्धकज्ञानविषयीभूतोऽर्थ उत्तरम्। प्रश्नश्च जिज्ञासा। सा ज्ञान-विषयेच्छा। सोत्तरवाक्यार्थज्ञानेन निवर्तते। अयमलंकारो द्विधा उत्तरश्रवणादेव यत्र प्रश्नस्य स्वयमुन्नयनं तत्र प्रथमः। यत्रासकृत् प्रश्ने सति असम्भाव्यमुत्तरं प्रदीयते तत्र द्वितीयः। द्वितीये भेदे प्रश्नोत्तरयोः सकृदुपादानं न चमत्कारीति प्रदीपाशयः। प्रश्नोत्तरयोरन्यतरस्य साभिप्रायत्वे सकृदुपादानेऽपि चमत्कार इत्युद्योतकृत्। इत्थं द्विविधमुत्तरं लक्षितं मम्मटेन यथा चोक्तम्—

उत्तरश्रुतिमात्रतः—

प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति।

असकृद्यदसम्भाव्यमुत्तरं स्यात्तदुत्तरम्॥'

'पण्डितराजेन प्रश्नोत्तरयोरयोरन्यतरस्याकूतगर्भत्वे सकृदुपादाने अपि चम-त्कारसत्त्वादलंकारत्वं स्वीकृत्य 'अनयोश्च संकृदुपादाने न चारुताप्रतीतिरित्यसकृ-दित्युक्तम्' इति मम्मटोक्तिः खण्डिता। पण्डितराजमतं नागेशेनापि समर्थितम्। अत एव तेनोद्योते "प्रश्नोत्तरयोरन्यतरस्याकूतगर्भत्वे सकृदुपादानेऽपि चम-त्कारोऽस्त्येव।

यथा—

'किमिति कृशासि कृशोदरि किं परकीय-वृत्तान्तैः" इति । अत्र प्रश्नेन प्रतीकारसामर्थ्यं व्यङ्ग्यम् उत्तरेण स्वस्य पातिव्रत्यं व्यङ्ग्यम् । ततश्चात्रापि उत्तरालंकारः ।' तयोः सकृदुपादान आक्षिप्ते प्रश्न उत्तरे प्रश्नाक्षेपकृतश्चमत्कारः सहृदयानुभवसाक्षिकस्तर्हि सोऽप्यलंकारः । अन्यथा आकूतगर्भत्वे तु नितरामलंकारता ।"इति प्रोक्तम्

रसगङ्गाधरेऽस्यालंकारस्य नाना भेदा उक्ताः । उन्नीतप्रश्नं निबद्धप्रश्नरूपमुत्तरं चोक्तम् । तयोः प्रत्येकस्य पद्यान्तर्वर्तित्वेन पद्यबहिर्वर्तित्वेन च द्वैविध्यम् । तत्राद्यस्याभिन्नवाक्योद्गीर्णत्व-भिन्नवाक्योद्गीर्णत्वाभ्यां द्विधात्वं पुनरुक्तम् । पद्यान्तस्थ-पद्यबहिस्थयोरप्युत्तरयोः सकृच्छब्दश्रुतिपर्याप्तत्वेन, शब्दावृत्तिपर्याप्तत्वेन, नानाप्रश्नानामेकपदनिवेदितोत्तरत्वेन प्रकारान्तरैश्च बहुप्रभेदत्वम् । तत्र पद्यान्तर्वर्तिनो भिन्न-वाक्योद्गीर्णत्वरूपस्यैकस्यैव भेदस्योदाहरणं 'किं कुर्वते दरिद्राः' इत्यादि खण्डितं पद्यमुपलभ्यते । एतावत्पर्यन्तस्यैव रसगङ्गाधरग्रन्थस्योपलम्भात् ।

'उदात्तं वस्तुनः सम्पन्महतां चोपलक्षणम्' इतिकाव्य-प्रकाशस्थ-लक्षणस्योदात्तालंकारस्य निरूपणं लभ्यमाने रसगङ्गाधरे नास्ति । अत एतदलंकारविषये पण्डितराजविचारः किमिति वक्तुम शक्यम् । एवमेव भाविकसूक्ष्म-संकर-संसृष्टीनां नोपलम्भः । इत्थं काव्यप्रकाशोक्तानां षण्णामलंकाराणां रसगङ्गाधरेऽनुपलम्भः । सूक्ष्मादीनां लक्षणं काव्यप्रकाशे प्रोक्तमेव । अतो विस्तरभिया न लिखितम् ।

## चतुर्थोऽध्यायः

# प्रकीर्णस्थल-तुलना

अस्मिन्नध्याये प्रकीर्णस्थल-विषये तुलना विधीयते—

**रौद्ररसोदाहरणविषये तुलना—**

काव्यप्रकाशकृता रौद्ररसे 'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकम्' इत्यादि पद्यं वेणीसंहारनाटकस्थमुदाहृतम् । पण्डितराजेनात्र रौद्ररसव्यञ्जनाक्षमायाः परुषावृत्तेरभाव उक्तः । तेनेह कवेरशक्तिः प्रतीयते । वस्तुतोऽयमाक्षेपोऽसन् । रौद्र-रसनिष्ठाया ओजोगुणव्यञ्जिकायाः समासादिप्रयोज्यशब्दकाठिन्यरूपाया वृत्तेरभावेऽपि अर्थस्य तद्व्यञ्जकत्वात् । ध्वन्यालोके द्वितीयोद्योते ध्वनिकृता 'तत्प्रकाशनपरश्चार्थोऽनपेक्षितदीर्घसमासरचनः प्रसन्नवाचकाभिधेयः' इति वचनेन प्रसन्नशब्दाभिधेयस्याप्यर्थस्य ओजोगुणव्यञ्जकत्वमुक्तम् । उदाहृतं च—'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः' इत्यादि वेणीसंहारस्थं पद्यम् । तेनात्र पण्डितराजस्याग्रह एव प्रतीयते ।

**अद्भुतरसोदाहरणविषये तुलना :—**

काव्यप्रकाशकृता—

'चित्रं महानेष बतावतारः<br>
क्व कान्तिरेषाऽभिनवैव भङ्गिः ।<br>
लोकोत्तरं धैर्यमहो प्रभावः<br>
काप्याकृतिर्नूतन एष सर्गः ।।'

इति पद्ये विस्मयस्य प्राधान्येन व्यज्यमानत्वाद् अद्भुत-रसध्वनिरुदाहृतः । रसगङ्गाधरकृता भावध्वनिरेवोक्तः । प्रतीयमानस्य विस्मयस्य वर्णनीयमहापुरुष-

विषयाया रतेरुत्कर्षकत्वेन गुणीभूतत्वात् । अत्र भक्तेरप्रतिपत्तिरिति तु सहृदयम्मन्यत्वम् । तस्मादत्र भावध्वनिरेव । यथा—'पश्यामि देवांस्तव देव देहे' इत्यादिगीतोक्तपद्ये ।

**वृत्ति-विषये तुलना :—**

काव्यप्रकाशकृन्मते चतस्रश्शब्दवृत्तयोऽभिधा-तात्पर्यलक्षणाव्यञ्जनाख्या: । वाक्यार्थ-बोधनाय तात्पर्यवृत्तेरंगीकार: । पदार्थमात्रोपस्थितिं विधाय विरतयाऽभिधया वाक्यार्थबोधासम्भवात् । तात्पर्यवृत्तिमनङ्गीकुर्वतां प्रभाकरमतानुयायिनां मीमांकासकानां मतमरमरणीयम् । सामान्य-विशेषरूपस्य व्यतिषिक्त पदार्थस्य अभिधया बोधेऽपि तात्पर्यवृत्ति-स्वीकारमन्तराऽतिविशेषभूतस्यवाक्यार्थस्य बोधासम्भवात् । अतएव मम्मटेनाभिहितान्वयवादे स्वादरसूचनार्थम्_"समुल्लसतीत्यभिहितान्वयवादिनाम्मतम्' इति वृत्तौ' 'अभिहितान्वयवादिनाम्' इत्यत्र बहुवचनमुक्तम् । 'वाच्य एव वाक्यार्थ इत्यन्विताभिधानवदिन:' इत्यत्र एकवचनं प्रयुञ्जानेन तेनान्विताभिधानवादेऽरुचि: सूचिता । तद्बीजन्तूक्तं प्राक् । पण्डितराजेन तात्पर्यवृत्तिविषये विचारविशेषो न कृत: ।

**अभिधाविषये तुलना :—**

शक्त्याख्यश्शब्दार्थयो र्वाच्यवाचकभावापरपर्याय: सम्बन्ध विशेषोऽभिधा । सम्बन्धविशेषस्यैवाभिधात्वं परमलघुमञ्जूषायामप्युक्तम् । खण्डितं च 'अस्माच्छब्दादयमर्थो बोद्धधव्य:' इत्याकारिकाया ईश्वरेच्छाया: सम्बन्धरूपत्वाभावेन शक्तित्वम् । शब्देनार्थस्यार्थेन शब्दस्य च स्मरणेन शब्दार्थयो:[१] कश्चित् सम्बन्धोऽवश्यमभ्युपेय: । यथा हस्ति-हस्तिपकयोरन्यतरस्य दर्शनेनान्यतरस्य स्मरणं तयो: सम्बन्धविशेषमवगमयति । पदपदार्थयो: स सम्बन्धश्चाभिधा । मम्मटसम्मताऽभिधा व्यापाररूपा तयैव संकेतितार्थस्य बोध: । साक्षात्-संकेतितार्थ-बोधक: शब्दो वाचक: । तन्निष्ठो वाच्यनिरूपितो व्यापारोभिधेति यावत् । उक्तं मम्मटेन—

'स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ।

---

१. तस्मात् पदपदार्थयो: सम्बन्धान्तरमेव शक्ति: वाच्य-वाचक-भावापरपर्याया ।
—परमलघुमञ्जूषा, वृत्तिनिरूपणप्रकरणम् ।

अभिधाविषये नानामतान्युल्लिख्य पण्डितराजेनापि तस्याः सम्बन्धरूपत्वमेव स्वीकृतम् । अभिधा त्रिधा । केवलसमुदायशक्तिः । केवलावयवशक्तिः समुदायावयवशक्ति-संकरश्च । इम एव भेदा रूढि-योगरूढि शब्दैर्व्यपदिश्यन्ते । केचित् शक्तिसंकरस्य द्विधात्वमामनन्ति-योगरूढि-यौगिकरूढिश्च । अन्ये-चाभिधायाश्चतुर्थं भेदं यौगिकरूढिमामनन्ति ।

अभिधया बोध्योऽर्थो वाच्यः । तया च साक्षात् संकेतित एवार्थोऽभिधीयते । संकेतिताश्च व्यक्तेरुपाधिभूता जाति-गुण-क्रिया-द्रव्यात्मका एवार्थाः । व्यक्तावानन्त्यव्यभिचार-दोषाभ्यां शक्तिग्रहः कर्तुमशक्यः । व्यक्तेराक्षेपेण लक्षणया वा बोधः । न च व्यक्तेरनन्यलभ्यत्वाभावेन पदार्थत्वानपत्तिरिति वाच्यम् । आक्षेपलभ्याया अपि तस्याः पदार्थत्वस्वीकारात् । न च शक्ति-ग्रह-पदार्थोपस्थिति-शाब्दबोधानां समानाकारत्वनियमेन व्यक्तौ शक्तिग्रहाभावे तस्याः शाब्दबोधेभानानापत्तिरिति वाच्यम् । यतो यद्विषयकः शक्तिग्रह स्तद्विषयिकोपस्थितिः, यद्विषयिका सा तद्विषयकः शाब्द-बोध इति शक्ति-ग्रह-पदार्थोपस्थिति-शाब्दबोधानां कार्यकारणभावो न कल्प्यते । किन्तु यत्प्रकारकः शक्तिग्रहस्तत्प्रकारिकोपस्थितिः यत्पकारिका सा तत्प्रकारकश्च शाब्दबोध इति कल्प्यते । संसर्गमर्यादयैकस्मिन्पदार्थेऽपरपदार्थसम्बन्धस्य भानवद्व्यक्तेरपि भानमङ्गीक्रियते ।

मीमांसका एतादृशं कार्यकारणभावमनादृत्य व्यक्तेः शाब्दबोधे भानाय लक्षणया तद्बोधमङ्गीकुर्वन्ति । परन्तु तेषां मतमसमीचीनम् व्यक्तेरर्थापत्त्यैव बोधोपपत्तौ तस्यां लक्षणाङ्गीकारस्यानुचितत्वात् । अनन्यलभ्यो हि शब्दार्थ इति सिद्धान्तात् । अतएव मम्मटेन व्यक्ते र्लक्ष्यत्वं खण्डितम् । पण्डितराजेन लक्षणयापि व्यक्तेर्बोध उक्तः । किन्तु तस्य समीचीनत्वं खण्डितम् । वस्तुतो न पण्डितराजस्यापि व्यक्ते र्लक्ष्यत्वे तात्पर्यमिति प्रतीमः ।

नागेशभट्टा जाति-विशिष्टां व्यक्तिं व्यक्तिविशिष्टां जातिं वा शक्यामाहुः । विशिष्ट शक्तिग्रहेऽनुभवस्यैव प्रमाणत्वात् ।[१] वस्तुतो व्यक्तेरुपाधिष्वेव शक्तिग्रहः समीचीनः । अतएव पतञ्जलिना जात्यादीनां चतुर्णां प्रवृत्ति-निमित्तत्वमुक्तम् ।

---

१. वस्तुतस्तु -न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः 'इति सरूपसूत्रभाष्याद् विशिष्टमेव वाच्यम् । तथैवानुभवात् । अनुभवसिद्धस्यापलापानर्हत्वाच्च ।' परमलघुमंजूषा नामार्थनिरूपण-प्रकरणम् ।

**लक्षणा-विषये तुलना :—**

मुख्यार्थबाध-तत्सम्बन्धरूढिप्रयोजनान्यतर-हेतुकान्यार्थबोधक आरोपितः शब्दव्यापारो लक्षणा । स च व्यापारः किंस्वरूप इति मम्मटेन नोक्तम् । अतएव टीकाकारास्तद्विषये सन्दिहानाः सन्ति । अतः केचित् शक्यतावच्छेदकारोपम् केचिच्छक्य-सम्बन्धम् केचिच्च तात्पर्यमेव तत्स्वरूपं वदन्ति । काव्यप्रकाशटीकाकारेण झलकीकर वामनेन व्याहृतम्—

'सा च लक्षणा शक्यतावच्छेदकारोपरूपा शक्यसम्बन्धरूपा वा वक्तृतात्पर्यरूप वेत्यन्यत् ।'[१]

केचिच्च 'अन्योर्थो लक्ष्यते यत् सा लक्षणा' इति मूलकारिकां व्याचक्षणा अर्थ प्रतिपत्तिमेव लक्षणां मन्यन्ते । किन्तु तेषां मतमरुचिरम् । 'आरोपिता क्रिया' इत्यत्र क्रियापदेन लक्षणाया व्यापाररूपत्वस्योक्तत्वात् । इयं लक्षणा साक्षात् सम्बन्धेन मुख्यार्थनिष्ठा परम्परासम्बन्धेन च शब्दनिष्ठा । इति मम्मटस्याभिप्रायः । पण्डितराजेन शक्य-सम्बन्धश्च लक्षणात्वेन स्वीकृतः । तथा चोक्तम्— 'शक्यसम्बन्धो लक्षणा ।'शक्यस्य प्रवाहादे स्तीरादिना सह सामीप्यादिः साक्षात् सम्बन्धो लक्षणेति तदर्थः । यद्यपि लक्षणाभूताः सम्बन्धा नानाविधास्तथापि प्रसिद्धाः पञ्च ।

तथाचोक्तं परमलघुमञ्जूषायाम्—

**'तात्स्थ्यात्तथैव ताद्धर्म्यात्**

**तत्सामीप्यात्तथैव च ।**

**तत्साहचर्यात्तादर्थ्याज्**

**ज्ञेया वै लक्षणा बुधैः ।'**

मम्मटस्य पण्डितराजस्य च नये सर्वत्र शक्यतावच्छेदकरूपेणैव लक्ष्यमाणस्य प्रतीतिः । अन्यथा 'गङ्गायां घोषः' इत्यत्र तीरे गङ्गात्वप्रतीतेरभावे घोषे शैत्य-पावनत्वातिशयस्याप्रतिपत्तिः । 'कचतस्त्रस्यति वदनम्' इत्यादौ राहुत्वादिविशिष्टानां शक्यतावच्छेदककचत्वादि रूपेण प्रतीतावपि न त्रासादीनामनुपपत्तिः । 'तात्पर्यविषयान्वये मुख्यार्थतावच्छेदक-रूपेण मुख्यार्थ-प्रतियोगिकताया अभावो रूढिप्रयो-

---

१. का० प्र० वा० टी० ४० पृ० ।

जन्योरन्यतरच्च तन्त्रम्' इत्युक्तदिशा 'काकेभ्यो दधिरक्ष्यताम्' इत्यत्रापि न लक्षणानुपपत्तिरूपो दोषः । उक्तं रसचन्द्रिकायाम्—

'निष्कर्षस्तु लक्षणाजन्योपस्थितिं प्रति तात्पर्यविषयान्वये मुख्यार्थताऽवच्छेदकावच्छिन्नमुख्यार्थनिष्ठप्रतियोगितानिरूपकत्वाभावः कारणम् । काकेभ्योदधीत्यादौ तात्पर्य-विषयान्वयो रक्षायां विडालप्रतियोगिकस्तत्र काकप्रतियोगिकत्वाभावः । कचतस्त्रस्यतीत्यादौ त्रासे राहुत्वाविशिष्टराहुप्रतियोगिकस्तत्र कचप्रतियोगिकत्वाभावः । कचत्वेन राहुत्वविशिष्टस्य बोधात् त्रासोत्तिः । प्रतियोगिता- कत्वस्यैव प्रतियोगितानिरूपकत्वमित्यनेन विवरणं भवति न तु पदार्थान्तरम् ।'

लक्षणा षोढा । तथाहि-प्रथमं द्विधा शुद्धा गौणी च । आद्या पुनर्द्वेधा-उपादानलक्षणा लक्षणलक्षणा च । उपादानलक्षणा-लक्षणलक्षणे अपि प्रत्येकं सारोपा साध्यवसाना चेति द्विविधे । इत्थं शुद्धा चतुर्भेदा । गौणी द्विधा-सारोपा साध्यवसाना चेति लक्षणा षड्विधा । इति मम्मटमतम् । उक्तं तेन 'लक्षणा तेन षड्विधा ।' पण्डितराजा आहुः—

'इयं तावद्द्विविधा-निरूढा प्रयोजनवती च । तत्रापि द्वितीया द्विविधा-गौणी शुद्धा च । तत्राद्या सारोपा साध्यवसाना चेति द्विविधा । अन्त्या चतुर्धा जहत्स्वार्था, अजहत्स्वार्था, सारोपा साध्यवसाना चेति प्रयोजनवती षड्विधा ।'[१]

वस्तुतो रूढिप्रयोजनाभ्यां लक्षणाया भेदाधिक्यकरणमयुक्तम् । रूढिप्रयोजने हेतूत्वेनोक्ते, न तु विभाजकत्वेन । उक्तं काव्यप्रदीपे—

'रूढिप्रयोजनाभ्यां भेदे सम्भवत्यपि न ते विभाजकत्वेनोक्ते, किन्तु हेतुत्वेनेति न तत्कृतो भेदो गणितः ।'[२] इत्थं मत्वा केचिद्रसगङ्गाधरकारकृतं विभागं रूढिप्रयोजनकृतं वृथा मन्यन्ते । किन्तु रूढिप्रयोजनाभ्यामपि लक्षणाभेदो भवितुमर्हति । अतएव प्रकाशकृता पूर्वं 'लक्षणा तेन षड्विधा' इत्युक्त्वा "व्यङ्ग्येन 'रहिता रूढौ सहिता तु प्रयोजने' इति कथितम् । तेन रूढि-प्रयोजनकृतावपि भेदौ मम्मटेन स्वीकृतौ । अतएव काव्यप्रदीप उक्तम्—

---

१. र० गं० लक्षणाप्रकरणम् ।

२. का० प्रदी० ३६ पृ० ।

"अतएव च पश्चाद् व्यङ्ग्येन रहितां" इत्यादिना तत्कृतं दर्शयिष्यति'[1] 'इत्युक्तम्। रूढिमूलैकविधैव। प्रयोजनमूलायाश्च षोढात्वम्। केचिद् रूढिमूलाया अपि शुद्धागौणीत्वभ्यां द्वैविध्यमामनन्ति। जहत्स्वार्थाजहत्स्वार्था- पदाभ्यामुपादानलक्षणलक्षणयो र्ग्रहणम्। शुद्धाया उक्ताश्चत्वारो भेदा अनुपपन्नाः परस्परं सांकर्यापत्तेः। तथाहि— उपादान-लक्षणरूपयो र्भेदयोः सारोपत्वस्य साध्यवसानत्वस्य च सत्त्वेन सारोप-साध्यवसानयोर्लक्षणत्वस्योपादानत्वस्य च सत्त्वेन सांकर्यं स्पष्टम्। तस्मात् 'अन्त्या चतुर्विधा जहस्स्वार्था, अजहत्स्वार्था, सारोपा, साध्यवसाना च' इति पण्डितराजोक्तं निरस्तम्, शुद्धायाः प्रथमं द्वौ भेदौ-उपादानलक्षणा लक्षणलक्षणा च। इत्थं भेदकरणमेव युक्तम्।

एवं लक्षणाया व्यञ्जनकृतं त्रैविध्यम्-अव्यङ्ग्यम्, गूढव्यङ्ग्यम्, अगूढव्यङ्ग्यञ्च। अव्यङ्ग्य एव प्रभेदो निरूढलक्षणा।

**अभिधामूलव्यञ्जनाविषये तुलनाः—**

संयोगादिभि र्नानार्थकशब्दनिष्ठायामभिधायां नियन्त्रितायामप्राकरणिकार्थप्रतीतिकारिणी वृत्तिरमिधामूला शाब्दी व्यञ्जनेति मम्मटमतम्। तथा चोक्तम्—

**"अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।**
**संयोगाद्यैरवाच्यार्थधीकृद् व्यापृतिरञ्जनम्॥"**

पण्डितराजा अप्राकरणिकस्यापि अर्थस्याभिधावेद्यत्वं स्वीकुर्वन्ति, खण्डयन्ति च मम्मटमतं तस्य व्यञ्जनावेद्यत्वम्। तेषामयमाशयः—

'सुरभिमासं भवान् भुङ्क्ते' इत्यस्मिन् वाक्ये वक्तरि श्यालके सति नानार्थकात् सुरभिशब्दाद् गोमांसभक्षणरुपोऽप्राकरणिकोऽर्थो व्यञ्जनावेद्य इति मम्मटस्य हृदयम्। परन्तु नानार्थकस्य सुरभ्यादिपदस्य यदि नानार्थबोधने शक्तिस्तर्हि नियामकानां संयोगादीनां सद्भावेऽपि शब्दस्य तेषु तेष्वर्थेषु संकेतादभिधयैव तेषामवगतिः। नहि संयोगादयः शब्दस्य संकेतितानर्थान्निरोद्धुं क्षमाः। यथा 'पयो रमणीयम्' इत्यादौ द्व्यर्थकस्य पयःशब्दस्य दुग्धजलयोरर्थयोः संकेतः। न च नियामकानां संयोगादीनां सद्भावेन नानार्थानां शब्दानां प्राकरणिक एवार्थे संकेतोऽभ्युपेय इति वाच्यम्। 'पयआनय' इति वाक्यं निशम्य पयः-शब्दोभयार्थज्ञानवतां प्रकरणज्ञानां प्रकरणानभिज्ञं प्रति 'जल एव तात्पर्यम्, न तु दुग्धे' इति

---

१. का० प्रदी० ३६ पृ०।

कथनस्यानुचितत्वात्। संयोगादिभिरप्राकरणिकार्थ-प्रतीति-नियन्त्रणमयुक्तम्। शब्दस्य प्राकरणिकाऽप्राकरणिकोभयार्थगृहीतसङ्केतत्वात्। सति नानार्थधीजनके पदज्ञाने प्राकरणिकाप्राकारणिकानां समेषामर्थानामवगतिः समानैव। अतएव 'पय आनय' इत्यादौ सत्यपि प्रकरणज्ञाने द्व्यर्थप्रतीति र्नोपद्धा। इत्थं नानार्थस्थले सत्स्वपि संयोगादिषु समेषामर्थानामभिधयैव बोधः। अप्राकरणिकबोधार्थं न व्यञ्जनाया आवश्यकता। संयोगादयो नानार्थपदस्थल उपस्थितेष्वर्थेषु तात्पर्यविषयत्व-निर्णय-हेतवः। अतो योगरूढशब्दस्थले 'रूढि र्योगापहारिणी' इति नयेन रूढ्या यौगिके अर्थे नियन्त्रिते यौगिकार्थधीहेतु र्व्यञ्जना स्वीकार्या। यथा—

'अबलानां श्रियं हृत्वा वारिवाहैः सहानिशम्।
रमन्ते चपला यत्र स कालः समुपागतः॥'

इत्यादौ रूढ्याऽबलादीनां पदानां स्त्रीप्रभृत्यर्थेषु नियंत्रितेषु सङ्केतविषयत्वमनापन्नानां दुर्बलादीनां यौगिकार्थानां व्यञ्जनया बोधः। तथा चोक्तं जगन्नाथेन—

'योगरूढस्य शब्दस्य योगे रूढ्या नियन्त्रिते।
धियं योगस्पृशोऽर्थस्य या सूते व्यञ्जनैव सा॥'

श्लेषालंकारनिरूपण-प्रकरणेऽपि पण्डितराजेनोक्तम्—

'वयं तु ब्रूमः-अनेकार्थस्थले ह्यप्रकृताभिधाने शक्तेरुक्तिसम्भवोऽप्यस्ति। योगरूढिस्थले तु सापि दूरापास्ता।'

यथा वक्तृबोद्धव्यादिवैशिष्ट्येन नानार्थस्थले नियन्त्रितशक्त्याः समुल्लासेन तयैवापरार्थ-बोधोङ्गीक्रियते तथा योगरूढशब्दस्थलेऽपि वक्त्रादिवैशिष्ट्येन रूढि-प्रतिबन्धकताऽपि स्वीकार्या। अतो योगरूढिस्थलेऽपि व्यञ्जनाया नावसरः। इति नागेशभट्ट आह।[१] एवं शाब्दाभिधामूलव्यञ्जना विषय आलंकारिकाणां विवादः। अप्राकरणिकस्य शक्तिवेद्यत्वेऽपि व्यङ्ग्यानामुपमाद्यलंकाराणां तदसम्भवात् तेषां व्यञ्जनयैव बोध इति नानार्थ-स्थलालंकारव्यञ्जिकाऽभिधामूलव्यञ्जनाऽनिवार्येति मदीयो विचारः। व्यङ्ग्यालंकाराणां गुणीभूतत्वमिति त्वन्यत्।

---

१. एवं योगरूढपदानां यत्र योगार्थमात्रघटितार्थान्तरबोधकतेष्टा, तत्र तेषां प्रतिबन्धकतापि, स्वीकार्या, उत्तेजकता वा। एतेन वयं ब्रूम इत्याद्युक्तिरपास्ता।, गु० म० प्र० ५३४ पृ०।

# उपसंहारः

काव्यपद-प्रवृत्तिनिमित्तं गुणालंकारादिविशिष्टयोः शब्दार्थयो र्व्यासक्तम्। काव्यं त्रिधा। उत्तम-मध्यमाधमरूपत्वात्। तत् प्रति शक्तिनिपुणताभ्यासानां दण्ड-चक्रादिन्यायेन कारणता। रसचन्द्रिकाकारमते शक्ति-निपुणताभ्यासानां प्रोक्तन्यायेन प्रतिभां प्रत्येव कारणता। केवला प्रतिभा च काव्यकारणम्। एतन्मते शक्ति-प्रतिभयोर्भेदः। शक्तिपदस्यादृष्टमर्थः। न च 'संस्कार विशेषः' इति वृत्तिग्रन्थेन शक्तेरदृष्टपरत्वमनुपपन्नमिति वाच्यम्। अदृष्टेऽपि संस्कारपदप्रयोगस्य दृष्टत्वात्, नागेशेन शक्तिपदस्याऽदृष्टपरत्वेन व्याख्याततत्वाच्च।

चैतन्योपहितरत्यादय स्थायिनो नव रसाः। रसभावतदाभासादयोऽलक्ष्यक्रमा एव। संलक्ष्यक्रम ध्वनेः शब्दार्थोभयशक्तिमूलोऽपि भेदः। शुद्धध्वनेरेकपञ्चाशद् भेदाः। रीत्यपरपर्यायास्तिस्र उपनागरिकादयो वृत्तयः। माधुर्यादय स्त्रयो गुणा रसमात्रधर्माः। तेषां रचनादिषु गुणवृत्त्या वृत्तित्वम्। ते च गुणा द्रुत्यादिचित्तवृत्तिकारणलक्षणा स्तत्तद्वृत्तिकारणत्वरूपा वा।

काव्यात्मभूतरसोपकारका अर्थालंकारा एकषष्टिः। शब्दस्याभिधातात्पर्यलक्षणा-व्यञ्जनाख्याःश्चतस्रो वृत्तयः। अर्था अपि चतुर्धा। वाच्यतात्पर्यलक्ष्य व्यङ्ग्यरूपत्वात्। व्यञ्जनाख्या तुरीया वृत्तिर्द्विधा शाब्दी चार्थी च। पुनराद्या द्विधा। अभिधामूला, लक्षणमूला चा। संयोगादिभिर्नानार्थपदानां वाचकतायां नियमितायामन्यार्थधीहेतुरभिधामूला व्यञ्जना। मुख्यार्थबाध-तत्सम्बन्धयोः सत्त्वे रूढिप्रयोजनयोरन्यतरस्य च तत्त्वेऽन्यार्थबोधहेतुर्लक्षणा। प्रयोजनवल्लक्षणास्थले लक्षणामूला व्यञ्जना। यथा 'गङ्गायां घोषः' इत्यादौ घोषगतशैत्यपावनत्वातिशयप्रतीतिरनया व्यञ्जनया। लक्षणास्थले सर्वत्र मुख्यार्थरूपेणैव लक्ष्यार्थस्य भानम्। इत्थमेतद्ग्रन्थभणितानां काव्यप्रकाशस्थतदभिमत-साहित्यशास्त्रसिद्धान्तानां संक्षेपः। रसगङ्गाधरसम्मतसिद्धान्तानामयं सारांशः—

रमणीयार्थविशिष्टशब्दः काव्यम् । अर्थस्य रमणीयता च लोकोत्तराह्लादजनक-ज्ञानविषयता । 'अर्थपदेन प्रतिपाद्यस्य शब्दस्यापि ग्रहणमिति रसचन्द्रिकाकारव्याख्यानाशयः । काव्यं चतुर्धा । उत्तमोत्तमोत्तममध्यमाऽधमरूपत्वात् । ध्वनिकाव्यमुत्तमोत्तम्, गुणीभूतव्यङ्ग्यमुत्तमम् । अर्थचित्रं मध्यमम् । अधमञ्च शब्दचित्रम् । काव्यस्य कारणं प्रतिभामात्रम् । प्रतिभां प्रति देवता-गुरुमहाकृपाजन्यादृष्टस्य व्युत्पत्त्यभ्यासयोश्च तृणारणिमणि-न्यायेन हेतुत्वम् ।

रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः । विशेषणांशं विशेष्यांशं चादाया नित्याऽनित्यत्वादीनां व्यवहारः । रसस्यापि संलक्ष्य-क्रमत्वम् । यत्र प्रकरणादीनां स्फुटत्वे झगिति प्रतीतेभ्यो विभावादिभ्यो रसप्रतीतिस्तत्र रसानामसंलक्ष्यक्रमत्वम् । यत्र च प्रकरणादीनां न स्फुटत्वम्, उन्नेयाश्च विभावादयस्तत्र संलक्ष्यक्रमत्वम् । क्रमस्य सूक्ष्मस्य सहृदयेनाकलनात् । अभिनवगुप्तमम्मटादीनां मते क्रमस्य लक्ष्यत्वे विगलित-वेद्यान्त-रत्वानापत्त्या रसानां वस्तुमात्रत्वम् । अतस्तेषां मते अर्थशक्तिमूलस्य संलक्ष्यक्रमध्वने र्द्वादशभेदत्वं सूपपन्नम् । शब्दार्थोभयशक्तिमूलध्वनेरस्वीकारः । तस्य शब्दशक्तिमूल एव गतार्थत्वात् । अर्थशक्तिमूलध्वनेः कविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वरूप-व्यञ्जकोपाधिकृता श्चत्वारो भेदा असम्भवाः । शब्दशक्तिमूलस्य वस्त्वलङ्कारत्वरूप-व्यङ्ग्योपाधिकृतौ द्वौ भेदौ । इत्थं संकलनय । संलक्ष्यक्रमध्वने र्दशैव भेदाः । अर्थशक्तिमूलस्य संलक्ष्यक्रमध्वनेरष्टभेदाङ्गीकारात् ।

वैदर्भीप्रभृतयस्तिस्रो रीतयः । माधुर्यादीनां गुणानां न रसवृत्तित्वम् । तेषां रसनिष्ठत्वे मानाभावात् । निर्गुणे चित्स्वरूपे रसे गुणकल्पनस्यानुचितत्वाच्च । न च गुणानां विशेषण-रत्यादिनिष्ठत्वमिति वाच्यम् । गुंणे गुणानङ्गीकारात् । रत्यादयः स्वयमन्तः-करणगुणाः कथं माधुर्यादिगुणाश्रयाः स्युः । द्रुत्यादिचित्तवृत्ति-प्रयोजकत्वलक्षणाः प्रयोजकता-सम्बन्धेन द्रुत्यादिरूपा वा माधुर्यादयो गुणाः शब्दार्थ-वर्ण-रचनादिनिष्ठाः । अतः 'मधुरा रचना, ओजस्वी बन्धः' इत्यादीनां व्यवहाराणामुपपत्तये न गुण वृत्तिकल्पनस्यावश्यकता ।

यद्यपि रसगङ्गाधरे सप्ततिलंकारा निरूपिताः किन्तु ते सर्वे न सिद्धान्तरूपेण स्वीकृताः । षष्टिरेवालंकारा अङ्गीकृताः । प्रतीपोपमेयोपमादीपक-विनोक्ति-काव्य-लिंग-यथासंख्य-प्रत्यनीक-ललितावज्ञातद्गुण-नामानो दशालंकारा न स्वीकृताः । एषां मध्ये केचिदुक्तालंकारेषु प्रवेशिताः, केषाञ्चिच्चालंकारत्वमेव खण्डितमिति

प्राग् विस्तरत उक्तम् । एषां निरूपणं पूर्वपक्षेकृतम् । काव्यप्रकाशोक्तानां भाविक-सूक्ष्मोदात्त-संकर-संसृष्टीनामलंकाराणां निरूपणं वर्तमान-रसगङ्गाधरे नोपलभ्यते ।

नानार्थ पदस्थले मम्मटोक्ताऽभिधामूला शाब्दी व्यञ्जना निरस्ता । अप्राकरणिकस्याप्यर्थस्य शक्तिवेद्यत्वम् । संयोगादीनामुपस्थितेषु नानार्थेषु कस्मिंश्चिदर्थे तात्पर्य-ग्राहकत्वम् । योगरूढिस्थले अभिधामूलव्यञ्जनायाः स्वीकारः । रूढ्या योगार्थे बाधिते योगार्थधीहेतुरियं व्यञ्जना स्वीकृता । इति रसगङ्गाधरे स्थितानां काव्य-प्रकाशाभिमतसिद्धान्तविरुद्धानां सिद्धान्तानां समासतः प्रदर्शनम् ।

शिष्टाः सिद्धान्ताः समानाः । अतस्तेषां समुल्लेखो नाकारि । यत्र यत्र काव्यप्रकाशसिद्धान्तेन रसगङ्गाधरसिद्धान्तस्य विरोधस्तत्र तत्र नानामनीषिणां मतमवलम्ब्य मया युक्तायुक्तत्वे प्रागुक्ते । अतः तदुपरि न पुनरुल्लिख्यते । इत्थं प्रस्तुत ग्रन्थमुपसंहरन् प्रमोदमानोऽहं कामये यदयं मनीषिणां मनोमोदं विदध्यादितिशम् ।

# सांकेतिकग्रन्थनामावली

| | | |
|---|---|---|
| सा० द० रु० टी० | : | साहित्य-दर्पणरुचिरा टीका । |
| गु० म० प्र० | : | गुरु-मर्म-प्रकाशः । |
| व० जी० | : | वक्रोक्ति-जीवितम् । |
| ध्व० लो० | : | ध्वन्यालोक । |
| वा० टी० | : | बालबोधिनीटीका । |
| का० प्रदी० | : | काव्य-प्रदीपः । |
| र० च० व्याख्या | : | रसचन्द्रिका व्याख्या । |
| वा० प० व्र० का० | : | वाक्यपदीयं ब्रह्मकाण्डम् । |
| र० गं० ध० | : | रसगङ्गाधरः । |
| ल० श० शे० | : | लघुशब्देन्दुशेखरः । |
| ध्व० लो० लोचनम् | : | ध्वन्यालोकलोचनम् । |
| सां० का० | : | सांख्य-कारिका । |
| र० गं० सरला | : | रसगङ्गाधर-सरला (टीका) । |
| का० प्र० बा० टी० | : | काव्यप्रकाश-बालबोधिनी टीका । |
| द्र० र० गं० चं० | : | द्रष्टव्या, रसगङ्गाधरचन्द्रिका । |
| द्र० का० प्रदी० | : | द्रष्टव्यः काव्यप्रदीपः । |
| भामहा० | : | भामहालंकारः । |
| सा० द० | : | साहित्यदर्पणः । |
| ना० शा० | : | नाट्यशास्त्रम् । |

| | | |
|---|---|---|
| द० रू० | : | दशरूपकम् । |
| मु० उ०, तृ० मु०, प्र० ख० | : | मुण्डकोपनिषद्, तृतीय मुण्डकम्, प्रथमखण्डम् । |
| सां० का० का० | : | सांख्यकारिका, कारिका । |
| रस चं० युत-र० गं० | : | रसचन्द्रिकायुत-रसगङ्गाधरः । |
| रस चं० यु० र० गं० | : | रसचन्द्रिकायुतरसगंगाधरः । |
| त० भा० त० र० दी० | : | तर्कभाषा-तर्करहस्य दीपिका । |
| ध्व० लो० लो० | : | ध्वन्यालोकलोचनम् । |
| का० प्र० ४ उ० | : | काव्यप्रकाशः, ४ उल्लासः । |
| र० गं० चं० सं० हि० व्या० | : | रसगंगाधर-चन्द्रिका संस्कृत हिन्दी व्याख्या । |
| र० गं० चं० सं० हि० व्या० उ० प्रे० द्वि० भा० | : | रसगंगाधरचन्द्रिका संस्कृत हिन्दी व्याख्या उत्प्रेक्षान्तो द्वितीय भागः । |
| पा० सू० | : | पाणिनीयसूत्रम् । |
| सि० कौ० | : | सिद्धान्त कौमुदी । |
| प्र० उ० | : | प्रदीपोद्योतः । |
| वै० भू० सा० | : | वैयाकरणभूषणसारः । |
| र० गु० म० प्र० टी० स० टी० सहि० | : | रसगंगाधरः गुरुमर्मप्रकाशटीका-सरला-टीका सहितः । |
| काव्या० सा० सं० | : | काव्यालंकारसारसंग्रहः । |
| र० गं० स० टी० | : | रसगंगाधर-सरलाटीका । |

## एतद्ग्रन्थसहायका ग्रन्थाः


१. काव्यप्रदीपः प्रभाटीकासहितः (१९१२ तमे खिष्टाब्दे द्वितीयावृत्तौ निर्णय-सागरस्थमुद्रणयन्त्रालयात् प्रकाशितः ।)

२. काव्यप्रकाशः (झलकीकरोपनामक भट्टवामनाचार्येण विरचितया बालबोधिनीनामधेयया टीकया विभूषितः, दामोदरात्मजरघुनाथेन षष्ठीयावृत्तितः संशोधितः, सप्तमावृत्तौ, १९६५ तमे खिष्टाब्दे पुण्यपत्तनस्थ-भाण्डारकर-इन्स्टिट्यूट यन्त्रालयान् मुद्रयित्वा प्रकाशितः ।)

३. काव्यप्रकाशः (नागेश्वरीटीकालंकृतः) ।

४. रसगङ्गाधरः (नागेशभट्ट-रचित-गुरुमर्मपरकाशाख्यया मथुरानाथरचित सरलाख्यया च टीकाभ्यां समन्वितः, मुम्बईस्थनिर्णय सागरमुद्रणयन्त्रालये मुद्रापयित्वा सत्यभामा बाई पाण्डर इत्येताभिः प्रकाशितः १९४७ तमे खिष्टाब्दे, षष्ठं संस्करणम्) ।

५. रसगङ्गाधरः (चन्द्रिका-संस्कृत-हिन्दी-व्याख्या युतः, प्रथमाननान्तः, चौखम्बाविद्याभवन वाराणसीतः १९७८ तमे खिष्टाब्दे प्रकाशितः, चतुर्थं संस्करणम् ।)

६. रसगङ्गाधरः (द्वितीयाननस्योत्त्रेक्षान्तभागः, चौखम्बाविद्याभवनवाराणसीतः प्रकाशितश्चन्द्रिका-संस्कृत-हिन्दी-व्याख्या युतः, १९५७ तमे खिष्टाब्दे प्रकाशनम् ।)

७. रसगङ्गाधरः (द्वितीयाननस्योत्तरालंकारान्तो भाग :, पूर्वोक्त व्याख्यायुतः, प्रकाशनमपि पूर्वोक्तम्, १९६९ तमे खिष्टाब्दे, द्वितीयं संस्करणम् ।

८. रसगङ्गाधरः (रसचन्द्रिकाव्याख्यायुतः प्रथमोभागः, सम्पूर्णानन्दसंस्कृतविश्वाविद्याल-यवाराणसीतः १९७७ तमे खिष्टाब्दे प्रकाशितः, प्रथमं संस्करणम्) ।

९. काव्यालंकारसारसंग्रहः (हिन्दी-साहित्य-सम्मेलन, प्रथम शासननिकाय-सचिवेन मोहनलालभट्टेन १९६६ तमे ख्रिष्टाब्दे प्रकाशितः, लघुवृत्तिसहितः, प्रथम संस्करणम् ।)

१०. काव्यालंकारः (भामहविरचितः) ।

११. कुवलयानन्दः । (अप्पयदीक्षितप्रणीतः)

१२. ध्वन्यालोकः (अभिनवगुप्तविरचित लोचनसहितः सटीप्पण-प्रकाशाख्य हिन्दी-व्याख्योपेतः, चौखम्बाविद्याभवन वाराणसीतः १९६५, तमे ख्रिष्टाब्दे प्रकाशितः प्रथमं संस्करणम् ।

१३. वैयाकरणभूषणसारः ।

१४. सिद्धान्तकौमुदी (तत्त्व बोधिनी सहिता टिप्पणीयुता निर्णयसागरमुद्रणालयतो मुद्रयित्वा १९४२ तमे ख्रिष्टाब्दे प्रकाशित । अष्टमावृत्तिः ।

१५. महाभाष्यम् ।

१६. सांख्यकारिका (श्रीकृष्णवल्लभाचार्यरचित-स्वामिनारायणभाष्यसहिता ।

१७. मुण्डकोपनिषद् ।

१८. वाक्यपदीयम् ।

१९. अष्टाध्यायी ।



(क) नाम–डॉ० राम कुमार शर्मा

पितृनाम–श्रीवैद्यनाथ शर्मा

(ख) जन्मस्थान– चपरख, इचाक, हजारीबाग, (विहार)

(ग) जन्मतिथि– २८.१२.१९५९

(घ) शिक्षा स्थान–

(१) का० ना० उ० वि० इचाक हजारी बाग (मैट्रिक)

(२) राजकीय संस्कृत महाविद्यालय राँची (शास्त्री)

(३) कामेश्वर सिंह संस्कृत विश्वविद्यालय दरभङ्गा (साहित्याचार्य तथा विद्यावारिधि (Ph.d)

(४) मगधविश्वविद्यालय बोध गया (एम्० ए०)

(ङ) पद- व्याख्याता (ज० ना० ब्र० आदर्श संस्कृतमविद्यालय रामभद्रपुर-लगमा, दरभङ्गा, विहार)

कृतियाँ–

(१) मुक्तककाव्य– सीतास्तुतिः राधास्तुतिः, लक्ष्मीस्तुतिः, वर्षावर्णनम्, सन्ध्यावर्णनम्, प्रभातवर्णनम्, सरस्वतीसन्देशः।

(२) महाकाव्य– "भरतचरितम्"।